मिथिलाविद्यापीठग्रन्थमाला

उमापत्युपाध्यायकृतम्

# पदार्थीयदिव्यचक्षुः

मिथिलाविद्यापीठस्थपाण्डुलिपिविभागाध्यक्षेण
मिश्रोपाह्वश्रीधीरानन्दशर्मणा सम्पादितम

मिथिलासंस्कृतविद्यापीठप्रधानेन प्रकाशितम्

मूल्यं २ रूप्यकाः ५०

मिथिलाविद्यापीठग्रन्थमाला त्रयोदशतमं पुष्पम्–(१ प्राचीनाचार्यग्रन्थावली)

उमापत्युपाध्यायविरचितम्

# पदार्थीयदिव्यचक्षुः

मिथिलासंस्कृतविद्यापीठस्थ
हस्तलिखितपुस्तकविभागाध्यक्षेण
मिश्रोपाह्वश्रीधीरानन्दशर्मणा
सम्पादितम्

डा० श्रीजनार्दनमिश्रेण
मिथिलासंस्कृतविद्यापीठप्रधानेन प्रकाशितम्

शकाब्दः १८८३ विक्रमाब्दः २०१८ खृष्टाब्दः १९६१

# PADĀRTHIYADIVYACAKṢUH

OF

# UMĀPATI UPĀDHYĀYA

*Edited by*

SHRI DHIRANAND MISHRA, M. A.

*Manuscript in charge*

Mithila Institute

Darbhanga

*Published by*

Dr. JANARDAN MISRA

Director,

MITHILA INSTITUTE

*of*

Post-Graduate Studies and Research in Sanskrit Learning

DARBHANGA

1961.



The GOVERNMENT OF BIHAR established the Mithila Institute of Post-Graduate Studies & Research in Sanskrit Learning at Darbhanga in 1951 with the object, **inter-alia,** to promo e advanced studies and research in Sanskrit learning to bring together the traditional Pandit with their profound learning and modern scholars with their technique of research and investigations, to publish works of permanent value to scholars. This institute is one of the six others started by this Government as a token of their homage to the tradition of learning and scholarship for which ancient Bihar was noted. Apart from the Mithila Institute, five others have been established and have been doing useful work for the last few years—the Nalanda Institute of Research and Post-Graduate studies in Budhist Learning and Pali at Nalanda, the K. P. Jayaswal Research Institute at Patna, the Bihar Rashtra Bhasa Parishad for Research and advanced studies in Hindi at Patna, the Institute of Post-Graduate studies and Research in Jaina and Prakrit Learning at Vaishali and the Institute of Post-Graduate studies and Research in Arabic and Persian Learning at Patna. In the establishment of the Mithila Institute the State Government received a generous donation from the Maharajadhi raja of Darbhanga for construction of the building on a plot of land also donated by him.

As part of this programme of rehabilitating and re-orientation of ancient learning and scholarship, the editing and publication of this volume has been under-taken with co-operation of Scholars in Bihar and outside. The Government of Bihar hope to continue to sponsor such projects and trust that this humble service to the world of scholarship and learning would bear fruit in the fulness of time

# उपन्यासः

इदमद्य मिथिलासंस्कृतविद्यापीटतो महामहोपाध्यायश्रीमदुमापत्युपाध्याय-विरचितं पदार्थीयं दिव्यचक्षुः प्रकाशमासादयति ।

प्रकाशने चादर्शतया गृहीतायां मातृकायामेकत्र "स्पष्टीकृतमेतदनुभवीये दिव्यचक्षुषी"ति निर्दिष्टमपि दृष्टम् । पाटसमालोचनाय (For collation) सङ्गृहीतयोर्मातृकान्तरयोश्च "स्पष्टीकृतमेतदनुमानीये दिव्यचक्षुषी" त्येव तत्र विन्यस्तमुपलब्धम् । यद्स्तु मौलिकमुभयोरनुभवीयानुमानीययोः किन्तु नूनमेत-दनुमीयते यदयं ग्रन्थो दिव्यचक्षुराख्यः । पदार्थीयमनुमानीयमनुभवीयं वा ग्रन्थकारेणोपन्यस्तप्रकरणविशेषाणामभिधाः । अतएव च प्रस्तुतग्रन्थस्य पुष्पि-कायाम—"पदार्थीयं दिव्यचक्षुः सम्पूर्णमि"त्यत्र पदार्थीयमिति सविभक्तिकं पृथग् विशेषणं निर्दिष्टम् ।

एतेन च शब्दनिरूपणस्य गुणनिरूपणस्य चापि चर्चाऽवश्यमेव श्रीमदु-मापतिना कृताऽऽसीदित्यनुमितं भवति ।

तेषु च दिष्ट्या पदार्थीयमन्तरा नान्यानि प्रकरणानि अधुनावधि समुप-लब्धानीति समुपलब्धयावद्धस्तलिखितपुस्तकसूचीसमवलोकनेनावगम्यते । एतद-पेक्षयाऽर्वाचीनेष्वपि यावदवलोकितग्रन्थेषु तेषां चर्चा नाधिगता ।

ग्रन्थश्चायं वैशेषिकपदार्थग्रन्थेष्वन्यतमोऽप्यनन्यतमो वैशेषिकपदार्थग्रन्थि-विमोके । स्थलविशेषेषु च कार्यकारणभावादिविशेषप्रतिपादनकलाविशेषेण वैशेषिकपदार्थस्यायं ग्रन्थविशेषो नितरामाशंसनीयं विशेषमावहति । अतोऽ-वश्यमेवास्य विषयविन्यासकला रोचिष्यते विलासनिरलसेभ्यस्तर्काटवीविटप-कुटीरेषु ।

ग्रन्थस्यास्य प्रकाशनसाधनसम्बलने क्रमशस्तिस्रो मातृकाः समुपलब्धाः । यत्र प्रथमं भूतपूर्वमिथिलासंस्कृतविद्यापीठप्रधानस्य महामहोपाध्यायडाक्टर-श्रीमदुमेशमिश्रमहाशयस्याशयमहत्वसमुद्भूतप्रभूतवात्सल्येन मिथिलाक्षरमयी मातृकै (Manuscript)का समुपलब्धा । किन्त्वत्र प्रतिलिपिकर्तृकृताऽशुद्धि-

बाहुल्यावलोकनेन प्रकाशनाय समुत्सहमानस्यापि मे मनसि परिशुद्धमातृकान्तरान्वेषणतत्परता प्रादुरभूत्। उपलब्धे च चिरान्मातृके द्वे। यत्रैका प्राक् प्राप्ता मिथिलाक्षरमयी स्वरूपतो विभिन्नापि प्रतिलेखककृताऽशुद्धिसत्त्वेनाक्षरशः पूर्वोपलब्धमातृकासमानैव। पुनर्वर्षद्वयप्रयासेनापरा परा तिसृषु देवनागराक्षरमयी पूर्वासादितमातृकाद्वयापेक्षया परिशुद्धा वाराणस्यामासादिता। इयं तृतीया च काशीविश्वविद्यालयस्य वेदान्तप्राध्यापकेन सर्वतन्त्रस्वतन्त्रमैथिलविद्वद्वरधर्मदत्त(बच्चा)झाशर्मणः शिष्येण स्वर्गीयलक्ष्मीनाथझाशर्मणा लिखिताऽधीता बहुत्र संशोधिता चासीत्। किन्तु क्वचिदसंशोधितस्थलेऽनुलिपिपरम्परयाऽशुद्धितादवस्थ्यमप्यनुभूतम्। यदविगणय्यापेक्षिकाधिकपरिशुद्धिपक्षपातेन देवनागराक्षरमयी मातृकैव प्रकाशनायादर्शीकृता। द्वे अपरे चाक्षरशः समे बहुलाशुद्धिकवलिते केवलं पाठसमालोचन (Collation) एव व्यवहृते। अतएव च प्रतिपत्रमधस्तात् पाठभेदनिर्देशे द्वयोर्मातृकयोः पृथङ्निर्देशमन्तरैव मातृकान्तरशब्देन निर्देशः कृतः द्वयोरेव समानाशुद्धिकत्त्वात्।

महामहोपाध्यायश्रीमदुमापत्युपाध्यायोऽस्य दिव्यचक्षुषो रचयितेति प्रागेव निर्दिष्टम्। अत्रोमापतिनामधेयाश्च विद्वांसो बहवो बभूवुरिति भूयसामनुसन्धानपटूनां पाण्डित्यम्। यत्र औफ्रेट ( Aufrecht ) महोदयः चतुर्दशोमापतीनां नामानि समुपन्यस्यति। प्रायोऽयमुमापतिकृतग्रन्थगणनामेव प्रामाण्येन प्रस्तौति। परं तन्न युक्तिपुष्टम् बहूनां ग्रन्थानां कर्तृत्वस्यैकत्रापि सम्भवात्। अग्रेचाग्रे स्फुटीभविष्यति।

उमापतयश्च बहवो बभूवुरिति तथ्यम्।

यथा—

१ केशवभट्टस्य चम्पूकाव्ये चर्चित उमापतिः। परमयमुमापतिर्दलपतीत्यादिनिर्दिश्यमानविरुदविशेषविशेषितः परेभ्यो विभिन्न एवासीदिति केशवभट्टकृतचम्पूकाव्यस्य पुष्पिकावलोकनेनैव परिज्ञायते। यथा—

"इति श्रीमन्महाराजाधिराजस्पृहणीयशौर्यौदार्यगाम्भीर्याद्यनेकानवद्यगुण-गणविराजमानश्रीमदुमापतिदलपतिराजोद्योतितभट्टकेशवविरचिते चम्पूकाव्ये पञ्चमः स्तवकः समाप्तः। ( MMC Pt. III P. 61 )

२ केशवकवीन्द्रकृतगौतमीयसूत्रप्रकाशिकायां प्रत्याह्निकमन्ते धृताभिधेय उमापतिः। यत्राह्निकान्ते निर्दिशति केशवः—

"उमापतिसगर्भेण श्रीविश्वधरसूनुना।
श्रीकेशवेन रचितं प्रथमे प्रथमाह्निकम् ॥"

अध्यायान्ते च :—

"तीरभुक्तिमहीपालपरिषन्मुख्यसूरिणा ॥
श्रीकेशवकवीन्द्रेण कृता सूत्रप्रकाशिका ॥ इति ॥

मैथिलपञ्जीप्रबन्धादवगम्यते यदयं सूत्रप्रकाशिकाकारः केशवः पलिवार-समौलवंशोत्पन्नः परमगुरुवाचस्पतेः पितृव्यो वत्सगोत्रीय इति।

३ जयदेवेन स्वरचितगीतगोविन्दे गृहीताभिधः उमापतिधरोप्येको दृश्यते—

"वाचः पल्लवयत्युमापतिधरः सन्दर्भशुद्धिं गिराम्,
जानीते जयदेव एव शरणः श्लाघ्यो दुरूहद्रुतेः।
शृङ्गारोत्तरसत्प्रमेयरचनैराचार्यगोवर्द्धन—
स्पर्धी कोऽपि न विश्रुतः श्रुतिधरो धोयी कविक्ष्मापतिः ॥" इति

४ उमापतिदत्तश्चैको वैयाकरणः।

५ एवमेकः शुद्धिनिर्णयकारः उमापतिरुपलभ्यते। यद्यपि शुद्धि-निर्णयस्य पुस्तकद्वयमासादितम्। ययोरेकत्र मङ्गलम् :—

प्रणम्य सच्चिदानन्दं श्रीमदुमापतिशर्मणा।
नानानिबन्धमाश्रित्य क्रियते शुद्धिनिर्णयः ॥" इति।

परत्र च शुद्धिनिर्णये:—

"आविर्भावतिरोभावौ जन्मप्रलयसंज्ञकौ ।
यदीयौ भवतो नित्यं वन्दे तद्ब्रह्मशाश्वतम् ॥
शिशूनामल्पबुद्धीनां झटिति प्रतिपत्तये
नानानिबन्धसिद्धोऽसौ लिख्यते शुद्धिनिर्णयः ॥

तथापि विभिन्नभावभाषाशैलीकमङ्गलद्वयावलोकनेनानुमातुं शक्यते यदुभौ शुद्धिनिर्णयौ उमापतिद्वयस्य कृती । पुष्पिके चोभयोः पुष्णीतः अनुमानमेनत् । प्रथमशुद्धिनिर्णयस्य पुष्पिका यथा :—

"इति महामहोपाध्याय पगौली सं० श्री मदुमापतिविरचितः शुद्धिनिर्णयः सम्पूर्णः । ( Mlthila Manuscript Vol 1 Page 17c )

द्वितीयशुद्धिनिर्णयस्य पुष्पिका यथा—

इति श्रीमदुमापतिविरचितः शुद्धिनिर्णयः सम्पूर्णः । ( Mitra's Notices Vol. VII ...... Page 176 ) इति ।

अनयोश्चैकत्र महामहोपाध्याय पगौली समित्यादिविशेषणस्य वर्तमानता परत्र चावर्त्तमानता कर्तृभेदं प्रतिपादयतः ।

६ 'सारसंग्रह' कारश्चैक उमापतिरपरः । योऽस्मिन्ग्रन्थे मङ्गलमातनोति :—

"प्रणम्य परमात्मानं श्री मदुमापतिशर्मणा ।
नानानिबन्धमालोक्य क्रियते सारसङ्ग्रहः ॥" इति

पुष्पिकायाञ्चात्र निजपरिचयं प्रदर्शयति—इति महामहोपाध्याय पगौली सं० श्री मदुमापतिकृते सारसंग्रहे अनधिकारिनिरूपणम् ॥" इति ।

कश्चिदत्र सारसंग्रहकारं प्रथमशुद्धिनिर्णयकाराद् भिन्नमभिप्रैति, यन्न सौलभ्येन सिद्ध्यति तदुभयोर्मङ्गलपुष्पिकादिगतभावभाषापरिचयादिसाम्यस्य सर्वानुभवसिद्धस्य वर्तमानत्वात् । अतएव प्रथमशुद्धिनिर्णयकारः म० म० पगौली समित्याद्युपाधिविशिष्टोमापतिर्न विशिष्टः सारसंग्रहकाराद परमभिन्न एवेति विनिश्चिनोति चेतः ।

७ एकोऽन्यः स्मृतिदीपिकाकारः। यः स्मृतिदीपिकायां मङ्गल माचरति –

"प्रणम्य सच्चिदानन्दमुमापतिसुधीर्मुदा।
नानानिबन्धमाश्रित्य करोति स्मृतिदीपिकाम् ॥१॥"

पुष्पिकां च रचयति –

"इति महामहोपाध्यायश्रीमदुमापतिकृता स्मृतिदीपिका समाप्ता।" इति।

अत्र "प्रणम्य सच्चिदानन्दं श्रीमदुमापतिशर्मणा। नानानिबन्धमाश्रित्य क्रियते स्मृतिदीपिका॥ इति क्रमेण प्रथमशुद्धिनिर्णयस्य मङ्गलशैली नासादिता नवा पुष्पिकायां "पगौली सं०" इत्यादि निजपरिचयोऽपि प्रदत्तः यः क्रमः सोलभ्येन ग्रहीतुं शक्येत। अत एव नायं प्रथमशुद्धिनिर्णयकारादभिन्न इत्येव सिद्धान्तो विचारपथे पथिकायते चिरात्। अत एव च सारसंग्रहकारादपि भेदमेव साधयति मङ्गलपुष्पिकादिगतशैलीपरिचयादिसाम्यविरहः।

८ एवमेकः पारिजातहरणनाटककारोऽप्युमापतिः समुपलभ्यते। योऽयं पारिजातहरणनाटकस्य मङ्गलश्लोके देवीमेव स्तुतवान्। पश्चाच्च हरिप्रभाव-प्रकटनपटीयसः प्रस्तूयमाननाटकस्य प्रारम्भे हरेः स्तुतिमन्तरा प्रस्तावना त्रुटिं मा वहत्विति हरिस्तुत्यात्मकं पद्यान्तरं निर्माति। यथा—

"क्षोणी यस्य रदे मृणालशकलं मूलार्णवः पल्वलं
स्वर्गङ्गा वसनं विभाति गगनं कस्तूरिकालेपनम्।
चञ्चच्चारुललाटचन्दनमुडुश्रेणी गता माल्यताम्
तेन श्रीधरणीधरेण हरिणा हिन्दूपतिः पाल्यताम्॥" इति

अनन्तरं चान्ते पुष्पिकायां परिचयं ददाति –

"इति महामहोपाध्यायकविपण्डितमुख्यश्रीमदुमापतिविरचितं पारिजात-हरणाख्यनाटकं समाप्तम्॥" इति।

अत्र देवीस्तुतिरूपं मङ्गलं प्रागुक्तयावदुमापतिरचितग्रन्थेषु विन्यस्तमङ्गले-भ्यो वैलक्षण्यमावहति। पुष्पिकायां च "पण्डितमुख्य" शब्दप्रयोगो नान्यत्र परत्र

कुत्रापि दृश्यते। अतोऽयमुमापतिः सर्वेभ्यो विभिन्न इवाभासते।

एतदतिरिक्ताश्चापि बहवो ग्रन्थाः उमापतिनामधेयानामुपलभ्यन्ते। येषां नामानि अधस्तान्निर्दिश्यन्ते

(१) प्रतिष्ठाविवेकः। (२) श्राद्धनिर्णयः। (३) हठप्रदीपिकाटिप्पणम्। (४) रत्नमालाटीका। (५) वृत्तिवार्त्तिकम्। (६) करुणकल्पलताभक्तिः।

परमेतेषां मङ्गलादीनि अनुपलम्भान्न परीक्ष्यन्ते। यावन्ति च परीक्षितानि तावत्स्वपि बहुषु भावभाषाशैलीप्रभृतीनां वैषम्यमवगत्यानेके उमापतयोबभूवुरिति विनिश्चिनोमि। तेषु नैकोऽपि पदार्थीयदिव्यचक्षुष्कारः। दिव्यचक्षुष्कारश्च सर्वेभ्यो विभिन्न एवेति पुरोविधीयमानमङ्गलादिपरीक्षयैव संलक्ष्यते।

(क) पदार्थीये दिव्यचक्षुषि यथा मङ्गलमातनोति श्रीमदुमापति :—

"ॐ शिवाय नमस्तस्मै निस्त्रैगुण्याय विष्णवे।
नित्यानन्दाय सर्वत्र ज्ञानेच्छायत्नयोगिने॥" इति

अत्र प्रस्तुतमङ्गलेषु कस्यापि भावभाषाशैलीसाम्यं नाधिगम्यते।

"उभयोः प्रकृतिरत्रैका प्रत्ययभेदाद्विभिन्नवद्भाति।
कलयति कश्चिन्मूढो हरिहरभेदं विना शास्त्रम्॥"

इति लोकोक्तिं सार्थकयतो दिव्यचक्षुष्कारस्य मङ्गलशैली नूनमेव विलक्षणेत्यस्मिन्नुमापतौ सर्वेभ्यो वैलक्षण्यप्रतिपादने चित्तं नानुभवति कामपि विप्रतिपत्तिम्।

(ख) यस्य शास्त्रस्य ग्रन्थमयं निर्माति तस्य शास्त्रार्णवस्य कर्णधारानपि नैव तावदनभिवन्दितान् जहाति दिव्यचक्षुष्कार इति दिव्यचक्षुषि तेन समधिगतपद्धत्यैवानुमीयते। यथा मङ्गलानन्तरमेवोमापतिः स्तौति तान् दिव्यचक्षुषि—

"गौतमकणादकपिलप्रशस्तपादादिपरमगुरून्।"

परमियमपि शास्त्रार्णवकर्णधारस्मरणपरायणता दिव्यचक्षुषोऽतिरिक्ते न परस्मिन् कस्मिन्नपि श्रीमदुमापतिनामधेयेन विरचिते ग्रन्थे समुपलभ्यते।

(ग) स्वमातुलोऽप्यस्य गुरुरासीदिति दिव्यचक्षुषि श्रीमदुमापतिनैव मङ्गलानन्तरं विन्यस्तेन गुरुस्तुतिपद्येन निष्पद्यते। यथा—

"मातुलभवदेवादीनात्मगुरूनादराद्वन्दे ॥"

अत एव च निजगुरूणां मातुलभवदेवादीनामपि शास्त्रार्णवकर्णधाराणामिवाज्ञानार्णवतारणपरायणानामभिवन्दनमस्योमापतेर्विशिष्टैव शैली । या नोपेक्षणीया परेभ्यो वैलक्षण्ये युक्त्यन्वेषणनिरलसैः शेमुषीजुषामग्रेसरैः ।

(घ) दिव्यचक्षुषि मङ्गलगुरुवन्दनयोरनन्तरमेव श्रीमदुमापतिना मातापितृस्मरणमप्यकारि ।

"रत्नावतीरत्नपत्योः पित्रोः पूर्वतपोबलात् ।
आतनोमि पदार्थीयं दिव्यचक्षुरुमापतिः ॥" इति ।

एवं दिव्यचक्षुष्कारोऽयमुमापतिः ग्रन्थारम्भे ग्रन्थसमाप्तौ च यत्र तत्र पितृनामोपन्यासे स्वगौरवमावहन् किङ्कारमन्यस्मिन् कस्मिन्नपि ग्रन्थे पितुर्नाम क्वचिदपि न विन्यस्येत् । अतोऽयमवश्यमेव सर्वेभ्यो विलक्षणः ।

(ङ) एवं च परः पगौलीसमिति वंशपरिचयं प्रदर्शयन् साण्डिल्यगोत्रीयमात्मानं प्रदर्शयति । अयं च दिव्यचक्षुष्कारः स्पष्टतयाऽऽत्मानं काश्यपगोत्रीयं प्रस्तौति । यथा दिव्यचक्षुषः पुष्पिकायामवलोक्यते—

"वेदवेदाङ्गपारगमहामहोपाध्यायरत्नपत्युपाध्यायात्मजमहामहोपाध्यायकाश्यपश्रीमदुमापतिविरचितं पदार्थीयं दिव्यचक्षुः सम्पूर्णमिति ॥"

एतेनात्र योऽयमुमापतिः पगौली समिति वंशपरिचयं ददाति स तु साण्डिल्यगोत्रीयत्वादितरां दिव्यचक्षुष्काराद् विभिन्नः सिध्यति । योऽपि पुष्पिकादौ गोत्रं न स्पष्टीकरोति सोऽपि स्वभाववैपरीत्यात्तस्माद् विभिन्न एवेति दिव्यचक्षुष्कारस्य सर्वेभ्यो वैलक्षण्ये नासाद्यते विप्रतिपत्त्यवसरोऽस्माभिः ।

दिव्यचक्षुषः पारिजातहरणनाटकस्य च रचयिताऽभिन्न एवेति कियतां मतिमतां मतमप्येतेनैव युक्तिजातेन नितरामरुचिकरं प्रतिभाति ।

सिद्धे चास्मिन् सर्वेभ्यः पृथग्भूते कोऽस्य समय इति विनिश्चिन्वानस्य मे "सप्तदशशतकीयोऽयं पदार्थीयदिव्यचक्षुष्कारः "इति प्रतिपादयतां मतं नाधुना युक्तियुक्तं प्रतिभाति । नाटककाराच्च भेदसिद्ध्या त्रयोदशशतकीयत्वमप्यस्मिन्

ग्रियर्सनमहोदयप्रभृतिभिरङ्गीकृतं न समन्वेति।

यथा च रत्नपतिरस्योमापतेः पितेति न परोक्षं दिव्यचक्षुरीक्षमाणानां प्रेक्षावताम्। चतुश्चत्वारिंशदधिकषोडशशततमे (१६४४) खृष्टाब्दे मिथिलाक्षरे विन्यस्तस्य सन्ततमहायाससमासादितस्य रत्नपतिविरचितस्य हरिविजयमहाकाव्यस्याश्रुतपूर्वनामधेयस्य तालपत्रमयमप्राप्तपूर्वपुस्तकान्तरं पुस्तकमासाद्य नूनमेवायं रत्नपतिः १६४४खृष्टाब्दात् प्रागेव बभूवेति निश्चीयतेस्म।

तदनन्तरं रत्नपतिकृतं विवेकोदयनामकं तालपत्रमयं पुस्तकान्तरमुपलब्धम्। यच्च रत्नपतेर्जीवनसमये एव विलिखितमिति विवेकोदये पुष्पिकानन्तरं विन्यस्तपङ्क्तिभिरनुमीयते यथा—

"ल० सं० ४२६ वालीग्रामे महामहोपाध्यायश्रीशिवपतेराज्ञया श्रीनारायणेन लिखितमिदं पुस्तकमिति॥"

महामहोपाध्यायश्रीशिवपतिः रत्नपतेरग्रज इति रत्नपतेर्विवेकोदयस्य पुष्पिकायामेवावलोक्यते यथा—

"इति श्रीमहामहोपाध्यायश्रीहरि⋯त्मजमहामहोपाध्यायश्रीशिवपतेरनुजेन महोपाध्यायश्रीरमापतेरग्रजेन श्रीरत्नपतिशर्मणा कृतोऽयं विवेकोदयः सम्पूर्णः॥" इति।

एतेनैतत्सिद्ध्यति यदयं रत्नपतिः ४२६ लक्ष्मणाब्दे (समन्वयेन १५३७ खृष्टाब्दे) आसीत्। यतो रत्नपतेरग्रजो महामहोपाध्यायः श्रीशिवपतिः १५३७ खृष्टाब्दे विवेकोदयप्रतिलिपये नारायणनामकं वालीग्रामाभिजनं कमप्यादिदेश।

इत्थं च यदि रत्नपतेः स्थितिसमयः १५३७ खृष्टाब्दः सिद्ध्यति तर्हि रत्नपतेः पुत्रस्योमापतेर्दिव्यचक्षुष्कारस्य षोड़शशतकीयत्वं सौलभ्येन साधयितुं शक्यते।

उमापतिनामधेयानां च यावन्तो ग्रन्थाः समुलभ्यन्ते तावत्सु दिव्यचक्षुरन्तरा नान्यः कोऽपि न्यायवैशेषिकग्रन्थः। अत एव यावदुपलब्धग्रन्थकारेषूमापतिषु प्रौढतमो नैयायिको दिव्यचक्षुष्कार एवेत्यप्यनुमातुं शक्यते।

यद्यप्येकः कोइलखग्रामाभिजनोऽप्युमापतिर्नैयायिको महामहोपाध्याय गोकुलनाथस्य गुरुरासीदिति मिथिलावासिभिर्गीयते, प्रस्तूयते च तैर्मिथिला-भाषामयं पद्यमेकं प्रामाण्ये, तथाप्ययमुमापतिर्दिव्यचक्षुष्कारादुमापतेर्विभिन्न एवेति रत्नपतेर्गोकुलनाथस्य च समयतारतम्येनैवानुमीयते। यतो हि गोकुल-नाथस्य विद्वद्वर्गविनिश्चितः समयः १६५०–१७४० खृष्टाब्दः। रत्नपतेश्च प्रागुक्त-तद्रचितविवेकोदयस्य प्रतिलिपिसमय (१५३७ A. D.) मनुसृत्य १५०० - १५६० खृष्टाब्दः समयो निर्णेतुं शक्यः। तदनुसारेण च रत्नपतिपुत्रस्योमापतेः समयः १५२५—१६०० खृष्टाब्दो भवितुमर्हति। अतएव च नायमुमापतिः १६४० – १६५० खृष्टाब्दमध्ये जातस्य महामहोपाध्यायगोकुलनाथस्य गुरुर्भवितुमर्हतीति गोकुलनाथस्य गुरुरुमापतिः कोइलखग्रामवासी विभिन्न एवासीदित्याशासे।

एवं च मैथिलपञ्जीप्रबन्धस्य बहुशः पर्यालोचनयापि रत्नपते रत्नपति-सुतस्योमापतेश्च पर्याप्तपरिचयः समयश्च नासदितौ। अतो यथाकथञ्चित् तयो-र्ग्रन्थपर्यालोचनयैव समयनिर्णयो भवितुमर्हति।

भवदेवोऽस्य मातुलो गुरुश्चेति विनिश्चितं प्रागेव। गुरुस्मरणावसरे स्मृतोऽयं भवदेवोऽवश्यमेव विद्वानासीदित्यप्यस्य गुरुत्वमेव प्रतिपादयति। ११४० खृष्टाब्दे स्थितस्य प्रायश्चित्तादिनिबन्धकृतो भवदेवस्य चर्चा हेमाद्रिभिर्निबन्ध-कारैरपि कृता। तदनन्तरं च येषां भवदेवानां चर्चा काणेमहोदयेन कृता तेऽपि षोडशशतकानन्तरमेव बभूवुरिति काणेकृतधर्मशास्त्रेतिहासावलोकनेन निश्चीयते। यथा –

There ware several later persons named Bhavadeva, who wrote on topics of Dharmaśāstra, such as—Bhava-deva, author of दानधर्मप्रक्रिया etc. ( Middle of 17th century) ( History of Dharmaśāsra by P. V Kane Vol I Page 306 ) परन्तु तस्मिन् समये नैकोऽपि रत्नपतिनामधेयो महामहोपाध्यायो बभूवेति मिथिलेतिहासावलोकनेन ज्ञायते। अतएव तेनापि समयनिर्णयो न शक्यः।

दिव्यचक्षुषि —

"अतएव रघुनाथेनानुमितिं प्रति अनुमितिसमानाधिकरणाव्यवहितपूर्ववृत्तित्वादिना कारणता निरस्ता पक्षताग्रन्थे।" इति रघुनाथस्य मतमुपस्थापयति। अतो दिव्यचक्षुष्कारो रघुनाथस्य समकालिकः पश्चात्सम्भूतो वेति १५०० खृष्टाब्दादनन्तरमेवास्योमापतेः समयो भवितुमर्हति। विवेकोदयप्रतिलिपिमनुसृत्य १६०० खृष्टाब्दात्परमपि नायं स्थापयितुं शक्यः। अतएव षोडशशतकीयोऽयं दिव्यचक्षुष्कार उमापतिरिति मन्तव्यम्।

यदि च नास्य विवेकोदयकारस्य रत्नपेतर्न वा हरिविजयमहाकाव्यस्य रचयितुः पुत्रोऽयमुमापतिर्दिव्यचक्षुष्कार इति कल्प्यते तदापि रघुनाथमतमुद्धृत्य स्वयमेवात्मनि षोडशशतकीयत्वसप्तदशशतकीयत्वयोरन्यतरं स्थापयतिस्म।

उमापतिश्चास्मिन् दिव्यचक्षुषि बहूनां नैयायिकानां मतान्युद्धरति। समुद्धृतमतानि केषामिति पश्चात्प्रकाश्यमाने दिव्यचक्षुषः समालोचनाग्रन्थे प्रतिपादयिष्

अत्र च येषामाशीराशिभिरस्य दिव्यचक्षुषः प्रकाशनं निर्विघ्नं जातं तेषु मिथिलासंस्कृतविद्यापीठप्रधानडाक्टरश्रीमज्जनार्दनमिश्रमहोदयाः गुरुवरश्रीयुतशशिनाथझामहोदयाः विद्यापीठप्राध्यापकाः श्रीमदनन्तलालठक्कुरश्रीशोभाकन्त झा महोदयाश्च चिरं स्मरणीयाः। सुहृत्सु च विद्यापीठप्राध्यापकश्रीबाबूमिश्रमहोदयोऽपि समये साहाय्यसम्पादनाय धन्यवादार्हः।

अधुना यथामातृकं दिव्यचक्षुः प्रकाश्यते। पश्चादस्य समालोचनात्मको ग्रन्थः यथामति संशोधितः प्रकाशयिष्यते। प्राचीनहस्तलिखितपुस्तकानां हि प्रथमप्रकाशने परिशुद्धमातृकाविरहकृताशुद्धितादवस्थ्यं नियमत एव तिष्ठतीति तत् क्षन्तव्यमेव सहृदयैर्विद्वद्भिरिति सानुनयं नाथामि।

विदुषामनुचरः

धीरानन्दशर्ममिश्रः

# प्रकरणानामनुक्रमणिका ।



---

# पदार्थीयदिव्यचक्षुः

ॐ नमः शिवाय

ॐशिवाय नमस्तस्मै निस्त्रैगुण्याय विष्णवे ।
नित्यानन्दाय सर्वत्र ज्ञानेच्छायत्नयोगिने ॥१॥
गौतमकणादकपिलप्रशस्तपादादिपरमगुरून् ।
मातुलभवदेवादीनात्मगुरूनादराद्वन्दे ॥२॥
रत्नावतीरत्नपत्योः पित्रोः पूर्वतपोबलात् ।
आतनोमि पदार्थीयं दिव्यचक्षुरुमापतिः ॥३॥

द्रव्यगुणकर्मसामान्यविशेषसमवायाभावाः पदार्थाः सप्त। पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि द्रव्याणि नव। रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वस्नेहसंस्कारशब्दबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मा गुणाश्चतुर्विंशतिः। उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनानि कर्माणि पञ्च। अन्यानि कर्माणि गमनान्येव। नित्यमेकमनेकसमवेतं सामान्यम्। तद्द्विविधम्—परमपरञ्च। तत्राद्यमधिकदेशम्, सत्तादिकम्। अन्यमल्पदेशं द्रव्यत्वादिकम्। नित्यैकद्रव्यसमवेता विशेषाः। भावयोर्नित्यसम्बन्धः समवायः। अभावो द्विविधः–संसर्गाभावोन्योन्याभावश्च। तत्राद्यस्त्रिविधः प्रागभावः प्रध्वंसः, अत्यन्ताभावश्च। तत्र भावाः षट्। सत्तासामान्यवन्ति समवायिनाशनाश्यजातीयानि च त्रीणि। गुणवत् समवायिकारणम् असमवायिकारणसंयोगकार्यं तन्नाशनाश्यजातीयञ्च द्रव्यम्।

द्रव्येषु भूतानि बहिरिन्द्रियग्राह्यविशेषगुणवन्ति च पञ्च। मूर्तानि कर्मवन्ति च मनसा सहितानि चत्वारि। पृथिव्यां स्नेहं विना, अप्सु गन्धं विना, तेजसि

तौ रसं गुरुत्वं च विना, वायौ तानि रूपं[१] द्रवत्वं च विना संस्कारान्ता, आकाशे सशब्दाः संख्यादयः पञ्च सामान्यगुणाः, कालदिशोः केवलाः, आत्मनि विना शब्दं संस्कारादिसहिताः, मनसि तु परत्वापरत्वसंस्कारसहिता गुणाः। तत्र सत्तासामान्यं त्रिषु योग्येषु [२]सत् सदित्यनुगतप्रत्यक्षतः[३] सिद्ध्यत्[४] अयोग्येषु द्रव्यत्वादिजातिसाङ्कर्यभयेन सिद्ध्यति[५]। अनुमानतश्च गुणकर्मणी द्रव्यवृत्तिजातिमती जातिमत्वात् द्रव्यवदिति। न चार्थान्तरम्, द्रव्यगुणयोः गुणकर्मणोश्च विभिन्नजातौ[६] सांकर्यापत्तेः।

यद्वा द्रव्यान्यजातिमत् द्रव्यवृत्तिजातिमत् जातिमत्त्वात् इत्यतः पक्षतावच्छेदकावच्छेदेन लाघवादेका जातिः सिद्ध्यतीति सैव सत्ता। द्रव्यत्वं सामान्यविशेषो यद्यपि परमाण्वादौ पृथिवीत्वादिसङ्करभयेन सिद्ध्यन्नपि प्रत्यक्षतः पवनादौ न सिद्ध्यति। तथापि पृथिवी पृथिव्यतिरिक्तवृत्तिसत्तान्यूनवृत्तिजातिमती शब्दान्यविशेषगुणवत्त्वात् जलादिवदित्यनुमानात्। न च पृथिवीजलाद्युभयवृत्तिजात्यार्थान्तरं जलादिपक्षकानुमानैरपि तेजोजलोभयादिवृत्तिजातिसिद्धौ सांकर्यप्रसङ्गे न द्रव्यनवकवृत्तिजातिमादायैव सर्वानुमानपर्यवसानात्।

[७]यद्वा गुणवन्ति सत्तान्यूनवृत्तिजातिमन्ति सत्त्वात् गुणादिवदित्यत्र सत्तावदेका जातिः सिद्ध्यति सैव द्रव्यत्वम्। यद्वा पृथिवी जलं वा गुणवन्निष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वगुणवत्समवेतत्वोभयाभाववज्जातिमती[८] सत्त्वात् गुणादिवदित्यादि। अत्र च विपक्षबाधकस्य तर्कस्य समवायेन सम्बन्धेन जन्यसत्त्वेन तादात्म्येन द्रव्यत्वेन कार्यकारणभावो मूलम्। तादात्म्यं च स्वरूपेण द्रव्यत्वं "[९]स' द्रव्यत्वेनानुगतं तत्र[१०] द्रव्यस्वरूपं वा तथाच द्रव्यत्वेनापि

---

१ 'गुरुत्वम्' इत्यपि पुस्तकान्तरे। २ अन्यपुस्तके नास्ति। ३ '°नुगताकार°' इति पुस्तकान्तरे। ४ 'सिद्ध्यात्' इति मातृकायाम् आसीत् किन्तु तदपसारितम्। ५ 'न' इति मातृकायांमासीत् अन्वयानुरोधेन न संयोजितम्। ६ 'जातिसिद्धौ' इति समीचीनः पाठः। ७ 'अन्यद्वा' इत्यन्यपुस्तके। ८ '°भयाभाववत्सत्तान्यूनवृत्तिजातिमती' इति पाठः सम्यक्। ९ पुस्तकान्तरे नास्ति। १० तत्तद्द्रव्य° इति पुस्तकान्तरे।

सैव व्यक्तिः तस्याः व्यक्तेः सम्बन्धः संयोगत्वेन तदीयः संयोग इवेति नातिप्रसङ्गः ।

ननु जन्यद्रव्यादावयवसंयोगादिभिरसमवायिकारणैरन्यथासिद्धं द्रव्यं न[1] समवायिकारणमितिचेत् मैवं समवायेन जन्यरूपादौ [2]समवायिसमवेतत्वेन कारणस्य रूपादेरवयविद्रव्य इवावयवगुणादावपि सत्वात् तत्र कार्यस्य [3]जन्यरूपादेः प्रसङ्गस्य भङ्गाय जन्यसति द्रव्यस्यावश्यकत्वात्[4] । न च रूपादिप्रागभावस्य [5]कारणस्य बाधेनैव तद्भङ्ग इति वाच्यम् । नहि रूपादिप्रागभावत्वादिना कारणता मानाभावात् । किन्तु विभिन्नेषु देशेषु युगपज्जायमानानां सजातीयानामन्योन्यदेशव्यत्यासेन उत्पत्तेर्वारणाय तत्तद्व्यक्तौ तत्तत्प्रागभावत्वेन तत्तत्प्रागभावस्य तत्तद्देश एव धर्म्मिग्राहकमानेन सिद्धेः । तथाच यद्यद्रूपादिकम् एकैकक्रमेण जायते न यौगपद्येन तत्तद्व्यक्तिषु तत्तत्प्रागभावत्वै[6]रनन्तकारणत्वमपेक्ष्य लाघवाज्जन्यसति द्रव्यमेवैकं कारणं युक्तमिति ।

ननु चैकमेकदैव जायते इत्यत्र किं मानमिति चेत्, तदानीं द्वितीयोत्पत्तौ मानाभाव एव । येषां हि रूपादीनामाश्रयेन्द्रियसन्निकर्षानन्तरमुत्पन्नानां युगपदेव प्रत्यक्षादिकम् यौगपद्ये प्रमाणमस्ति तेषामस्तु तत्, अन्येषां तु कुतः, प्रत्युत यौगपद्यकल्पने तत्तद्व्यक्तिषु अनन्ततत्तत्प्रागभावकारणत्वकल्पनगौरवमिति ।

ननु क्रमिकाणां कुतो न देशव्यत्यास इति चेत्, यतोन्यदेशे तदा न तत्सामान्यकारणं द्रव्यादिकालनियामकपरं[7] तेषामिष्यते । तच्च कालिकविशेषणतासम्बन्धेन तत्तद्व्यक्तिं प्रति तादात्म्येन कालिकविशेषणतया वा कालोपाधिविशेषः कारणम्, अतो न कालव्यत्यासः । कालिकविशेषणता च इदमिदानीमिति प्रतीतिसाक्षिकः सम्बन्धविशेषः । तावता च तदैवावयवगुणादौ उक्तप्रसङ्गो न भज्यते इति द्रव्यसामान्यकारणमिति । यद्यच्च न व्यधिकरणेन सजातीयेन सह

---

१ 'स्व' इति पुस्तकान्तरे । २ 'स्वसमवायि' इति पुस्तकान्तरे । ३ पुस्तकान्तरे नास्ति । ४ '°वश्यं कारणत्वात्' इति पुस्तकान्तरे । ५ 'रूपादिकारणस्य' इति पुस्तकान्तरे । ६ '°त्वेना' इति पुस्तकान्तरे वर्त्तते । ७ 'नियामकं परम्' इति पुस्तकान्तरे वर्त्तते ।

यौगपद्येन न वा तेन सह क्रमेण उत्पद्यते तत्र तत्र तयोरेकस्यापि न विशिष्य हेतुत्वं मानाभावात् देशकालयोः सामान्यकारणैरेव नियमात् ।

इति सामान्यकारणतासिद्धिः ॥

[१]परेतु देशनियमार्थं देशएव विशिष्य हेतुः । सर्वत्र प्रागभावे मानाभावात् । देशस्य क्लृप्तत्वात् । प्रागभावसिद्धिस्तु नानादेशोत्पन्नैके[२]ककार्यव्यक्तीनां द्रव्यसंख्यासंयोगादीनां देशव्यत्यासवारणार्थं [३]तत्र तत्र विशिष्य नानादेशकारणत्वे गौरवादित्याहुः ।

यत्तु [४]तद्देशव्यक्तित्वेन तादात्म्येन कारणता तद्व्यक्तिसमवेतकार्यत्वादिना समवायादिना तद्व्यक्तिवृत्तिसमवायादिना कार्यत्वेन वा कार्यता पूर्वं तद्देशमात्रसमवेतकार्यदेशनियमार्थं क्लृप्ता, तत एव नानासमवेतकार्याणामपि देशनियमात् क्वापि न प्रागभाव इति । तन्न, एवं [५]नियमस्यैव नियामकत्वप्राप्तेः । एतद्रूपमत्रैव घटे जायते न पटे कथमित्यत्र प्रश्ने एतद्घटसमवेतं कार्यं यतो भवतीत्यस्यैवोत्तरस्य पर्यवसानात् । अत एव रघुनाथेन अनुमितिं प्रति अनुमितिसमानाधिकरणाव्यवहितपूर्ववृत्तित्वादिना कारणता निरस्ता पक्षताग्रन्थे । कार्यस्य कारणतावच्छेदकत्वे एतदेव कार्यवत् कुतो नान्यत् इत्यत्र एतदेव कार्यवद्यतो भवति इत्युत्तरस्यायोगात् । तस्मात् तदनुगमाभावे तत्तत्कार्यव्यक्तित्वेनैव कार्यता इति । सत्त्वमात्रस्य नित्यवृत्तित्वेन अनवच्छेदकतया[६] जन्यत्वं विशेषणम् । तच्च प्रागभावप्रतियोगित्वम् ।

अथ ध्वंसप्रतियोगित्वमेव अस्तु विनिगमकाभावात् इति चेत् न ध्वंसत्वं हि प्रागभावप्रतियोग्यभावत्वमेव, तथाच गौरवम् । अथ प्रागभावत्वस्यापि ध्वंसप्रतियोग्यभावत्वरूपस्य '[७]निवेशोऽस्तु इष्टित्वेऽन्योन्याश्रय' इतिचेत् न चरमस्पन्दासमान[८]कालीनाभावत्वरूपस्य प्रागभावत्वस्य निवेशात् ।

ननु जन्यमात्रस्य कालोपाधितया कालिकविशेषणतया घटत्ववदभावत्वमेव

---

१ इति पुस्तकान्तरे नास्ति । २ '°त्पन्न एकैक' इति पुस्तकान्तरे । ३ पुस्तकान्तरे नास्ति । ४ 'तत्तद्' इति पुस्तकान्तरे । ५ 'नियम्यस्यैव' इति पुस्तकान्तरे । ६ '°ताया' इति पुस्तकान्तरे । ७ 'निवेश्यत्वेऽन्योन्याश्रय' इति पुस्तकान्तरे । ८ "स्पन्दकालीन" इति पुस्तकान्तरे ।

ध्वंसत्वं लघु निवेश्यताम्। अथ पटत्वादिकमादाय विनिगमकाभावः। अतएव जन्यत्वं कालिकविशेषणतया [१]घटत्ववत्त्वं नोक्तमिति चेत् न भ्रान्तेः। पटत्वादिभ्यो हि विनिगमकस्य लाघवस्य विरहेण पटत्वं यदि न अवच्छेदकं तदा प्रागभाव-प्रतियोगित्वं सुतरां गौरवात्। एवं घटत्वाद्यपेक्षया गौरवाभावमात्रेण पटत्वादिकं यद्यवच्छेदकं प्रसज्यते तदा प्रागभावप्रतियोगित्वेऽवच्छेदके अभ्युपगम्यमाने नितरां लाघवात्। अन्यथा गौरवस्यैव वा विनिगमकतापत्तेः। अत एव सर्वत्र [२]प्रागभावे मानाभावाद् ध्वंसप्रतियोगित्वरूपं जन्यत्वं निवेश्यमित्यपि निरस्तम्। तस्मात् [३]जन्यत्वभेदेन कार्यकारणभावानन्त्यमिति चेत्, मैवं समवायकालिक-विशेषणतोभयसम्बन्धेन सत्ताया अवच्छेदकत्वात्। अतएव जन्यत्वसत्त्वयोः परस्परं विशेष्य-विशेषणभावे विनिगमनाविरहात् अवच्छेदकद्वित्वमित्यपास्तम्। यदि च समवायावच्छिन्नकार्यतायाः ध्वंसवृत्तिधर्मस्यावच्छेदकत्वेन दोष इति भाव्यते तदा कालिकसम्बन्धेन द्रव्यत्वस्यैव तथात्वं कारणतावच्छेदकतया शीघ्रोपस्थितिकत्वलाघवस्य विनिगमकत्वात्। यदि वा नित्यवृत्तिधर्मस्यापि कार्यतावच्छेदकत्वं न विरुद्ध्यते तदा समवायेन सत्वमेव तथेति ध्येयम्॥

इत एव सत्ताजातिः सिद्धयति इति न बोध्यम्। द्रव्यस्य कर्मणो वा गुणादौ प्रसङ्गाभावेन गुणमात्रे [४]समवायिरूपादिमात्रे वा कार्यतावच्छेदकजातेः कल्प-यितुमौचित्यात्। सिद्धे एव सामान्यादिलाघवप्रसरात्।

इतश्च सत्ताद्रव्यत्वयोः सिद्धिः एकार्थसमवायेन कारणस्य रूपादेः संयोगा-देर्वा भूतभविष्यविनश्यदवस्थद्रव्येऽपि सत्त्वेन तत्र रूपादेः संयोगजन्यसंयोगा-देर्वा क्वचित् क्वचिद्द्रव्यकर्मणोश्च प्रसङ्गभङ्गाय कार्यसहभावेन द्रव्यं कारणमाव-श्यकम्। तत्र सर्वसाधारणेन सत्त्वेनैव कार्यता द्रव्यत्वेनैव च कारणता। तत्र यद्यपि कार्यसहभूतत्वं कारणताविचारोक्तरीत्या सामान्यतो न व्यावर्त्तकं विशेष-तश्च तत्तद्व्यक्तिविश्रान्तं तथापि स्वप्रतियोग्याधारतासम्बन्धेन प्रागभावविशिष्ट-

---

१ '°घटवत्वं' इति पुस्तकान्तरे। २ 'प्रागभावत्वे' इति पुस्तकान्तरे। ३ 'जन्यत्वाभेदेन' इति पुस्तकान्तरे अनन्वितः पाठः। ४ 'समवायित्वं रूपादि' इति पुस्तकान्तरे। ५ "कालिकविधया" इति पुस्तकान्तरे।

त्वरूपमविनश्यदवस्थत्वमेव तत् । आधारता [4]कालविधया बोध्या । प्रतिक्षणं च किंचिदुत्पद्यत इति नियमः । तन्नाशसामग्रीक्षणे च तत्र न कोपि प्रागभावः प्रतियोग्याधारतयाऽस्ति कारणतावच्छेदकविशिष्टसत्त्वमेव च कार्योत्पादकमिति ।

इदन्तु बोद्धव्यम् दाहादौ प्रतिबन्धकस्य मण्यादेरभावे [1]सहभूतत्वमीदृशमनुगतमसम्भवीति मणिसंयोगादिसामग्रीं प्रतिबन्धिकामामनन्ति । सामग्रीत्वं च स्वजन्यसंयोगनाशविशिष्टसमवायाभिमुख्यान्यतरसम्बन्धेन [2]मणिक्रियावत्त्वादिरूप वाच्यम् । असाधारणकारणस्यैव सामग्रीत्वाभिधानात् ।

यद्वा अव्यवहितपूर्ववर्त्तित्वसामानाधिकरण्योभयसम्बन्धेन मणिसंयोगवत्त्वादिरूपं फलोपहितत्वमेव तत्सामग्रीत्वं वाच्यम् । सामानाधिकरण्यं च कार्यतावच्छेदकसम्बन्धेन स्वाधिकरणे [3]समवेतत्वमेव[4] [5]तत्तद्देशपवनसंयोगादेरेव सामग्रीत्वपर्यवसानम् । नच तादृशस्योपहितस्य संयोगादेरतिपूर्वमुत्तरं च सात्त्वात् तदापि कार्यं न स्यात्, स्वप्रागभावाधारकृतिरूपोत्पत्तिक्षणावच्छिन्नसमवायेन प्रतिबन्धकत्वाभिधानेप्यतिपूर्वं न स्यादिति वाच्यम् अव्यवहित[6]पूर्वत्वादिसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकाभावस्य'[7] तदा सत्त्वात् । मादृशस्तु सत्त्वमेव सामग्रीत्वं, मणिसंयोगादिमता समवायादिना सम्बन्धेन प्रतिबन्धकता दाहादौ वाच्या । [8]तत्त्वं च स्वाधारस्वप्रागभावाधारकृत्यवच्छिन्नत्वस्वसमवायिनिरूपितत्वोभयसम्बन्धेन समवाये निविष्टम् । तेन नोत्तरं नवा पूर्वं [9]प्रतिबन्धकस्य प्रसङ्ग इति वर्णयन्ति ॥

यदि च कारणताशरीर एव सहभूतत्वं निवेश्यते, नावच्छेदकम्, तदा न मणिसंयोगादिसामग्री प्रतिबन्धिका मानाभावात् । विवेचितं चेदमनुभवीये[10] दिव्यचक्षुषीति संक्षेपः ॥

---

१ "ईदृशं सहभूतत्व" इति पुस्तकान्तरे । २ "मणिक्रियात्वादि" इति पुस्तकान्तरे । ३ "समवेतत्वादिकम्" इति पुस्तकान्तरे । ४ "एवञ्च" इति पुस्तकान्तरे । ५ "तद्देशीय" इति पुस्तकान्तरे । ६ "पूर्ववर्त्तित्वादि" इति पुस्तकान्तरे । ७ '°ताकस्याभावस्य' इतिपुस्तकान्तरे । ८ "तद्वत्व च" इतिपुस्तकान्तरे । ९ 'प्रतिबन्धस्य' इतिपुस्तकान्तरे । १० '°मनुमानीये' इति पुस्तकान्तरे ।

[१]ध्वंसप्रतियोगिनः सत्त्वेन कारणत्वमग्रे विमर्शयिष्यते । तथा विभुविशेषगुणादिनाशकतापीति वक्ष्यमाणरीत्या आरम्भकसंयोगस्य गगनादावपि सम्भवात् जन्यद्रव्यं प्रति स्पर्शवत्त्वेन कारणत्वात् तद्घटितमपि लक्षणमिति केचित् तन्न पृथिवीजलादिविशेषकारणैर्वक्ष्यमाणैरन्यथासिद्धत्वादिति ॥

इति समवायिकारणतादर्शनम् ॥

जन्यद्रव्यं प्रत्यवयवद्वयसंयोगस्य द्व्यणुकानुरोधेन कर्मजत्वव्याप्यवैजात्येन असमवायिकारणत्वात् तत्कार्यताच्छेदकजातिमत्त्वमपि लक्षणमित्यपि न, घटाद्यारम्भकसंयोगात् [२]पटादिप्रसङ्गात् । नच पटादौ तन्तुत्वादिना समवायिनः कारणत्वान्नैवमिति वाच्यम् । तन्त्वादिष्वेव [३]गुणानाशंक्याद्यारम्भकसंयोगात् पटादेः प्रसङ्गस्य तथाप्यभङ्गात् । तथाच पटादौ विजातीयारम्भकसंयोगत्वादिना विशिष्य कारणतावश्यकत्वे सामान्यतः समवाय्यसमवायिकारणत्वयोर्मानाभावः ।

न च संयुक्तयोर्जलाद्योस्तेजःप्रभृतिषु प्रसङ्गवारणार्थं जन्यजलादौ जलादेः कारणतात्रयम् । असंयुक्तयोश्च जलाद्योः जलादेः प्रसङ्गवारणार्थं [४]जन्यद्रव्यत्वावच्छिन्नं प्रति आरम्भकसंयोगत्वेन कारणत्वमेकमास्तामिति वाच्यम् जलद्वयसंयोगादावेव [५]जलाद्यारम्भकजातित्रयाभ्युपगमेन कारणतात्रये लाघवात् ।

यत्तु जलतेजोवायूनामारम्भकेषु संयोगेषु जातिरेकैव कल्प्या अन्यत्र कल्पनागौरवान्मानाभावात् । तथाच तज्जातीयसम्बन्धेन[६] जलत्वादिना जन्यजलादौ कारणतात्रयम् । अतएव नित्यवृत्तिजलत्वादिजातयोपि सिद्ध्यन्तीतिमतं तन्नादेयम्, नित्यवृत्तिजातित्रयमारम्भकतावच्छेदकैकजातिं चापेक्ष्य आरम्भकतावच्छेदकजातित्रय एव लाघवात् । किं च घटादावेव नैकैकारम्भकतावच्छेदिका जातिः सम्भवति किमुत द्रव्यसामान्यस्य ? तथाहि संयोगे द्रव्यस्येव कर्मणः

---

१ 'ध्वंसं प्रति प्रतियोगिनः इति पुस्तकान्तरे । २ 'पटादेः प्रसंगात्' इति पुस्तकान्तरे । ३ "गुणाशंक्य" इति पुस्तकान्तरे । ४ 'जन्य द्रव्यं प्रति' इति पुस्तकान्तरे । ५ 'जलाद्यारम्भकतावच्छेदक' इति पुस्तकान्तरे । ६ 'तज्जातीयसंयोगसम्बन्धेन' इतिपुस्तकान्तरे ।

शब्दस्य च जनकतावच्छेदकं विभिन्नम् नोदनत्वाभिघातत्वाभ्यां[१] वैजात्यमस्ति, तथाच साङ्कर्यप्रसङ्गः। नचारम्भकतावच्छेदिका जातिर्व्यापिका तद्व्याप्यं च जातिद्वयं तद्विरुद्धं च जातिद्वयं नोदनत्वाभिघातत्वाख्यमिति वाच्यम्, विनिगमनाविरहेण विपरीतस्यापि वक्तुं शक्यत्वात्। तस्मात् तिस्रोपि भिद्यन्ते। तथाहि ये संयोगास्त्रयाणां जनकास्तेषु जातिरेका सैव विशेषितानां त्रयाणामपि जनकतावच्छेदिका। ये च द्वयोर्द्वयोरेव जनकाः तेषु च एकैका तयोस्तयोरेव तथा। एवं ये ये च एकैकस्य जनकास्तेषु तेष्वपीतिघटत्वाद्यवान्तरवैजात्यभेदाच्च जातिभेदाः द्रष्टव्याः

वस्तुतस्तु द्रव्यारम्भकतावच्छेदिका जातिरेव व्यापिका वैपरीत्ये हि तथा द्रव्यं प्रति संयोगस्य कारणता भिद्यते तथा तन्नाशस्य नाशकतापीति कारणताबाहुल्यापत्तिः। अथ तस्याः कर्मजत्वव्याप्यत्वे यत्रैककपालादिसंयुक्तस्य कपालिकादिद्रव्यस्य संयोगेन जनिते अपरकपालादौ संयोगज"संयोगस्तत्र[२] घटादिर्न" स्यादिति चेत्, न इष्टत्वात् द्व्यणुकानुरोधेन सर्वत्र [३]कर्मजस्यैवारम्भकत्वादित्येव द्रव्यत्वजातिः सिद्ध्यतीति न बोध्यम् भूतचतुष्टय एवोत्पत्तिविनाशाभ्यां तावता तत्रैव जातेः कल्पनार्हत्वात्। अतएव जन्यं द्रव्यं समवायेन प्रतिबध्यं तादात्म्येन द्रव्यत्वम् तत्प्रतिबन्धकतावच्छेदकजातिः सिद्ध्यतीत्यपि निरस्तम् सर्वद्रव्यसाधारण्ये मानाभावात्॥

इति आरम्भकसंयोगकारणतादर्शनम्॥

नन्वेवं विशिष्य पटादौ तन्तुत्वादिसमवायिनः कारणत्वे मानाभावः कपालादौ पटाद्यारम्भकविजातीयसंयोगबाधेनैवातिप्रसङ्गाभावादिति चेन्न समवायेन विजातीयसंयोगे समवायाभिमुख्यान्यतरसम्बन्धेन विजातीयक्रियायाः कारणत्वेन यत्रैकयैव तन्त्वादेः क्रियया तन्त्वादिभिः कपालादिभिश्च संयोगाः जनितास्तत्र सर्वेषां संयोगानामेकजात्येन कपालादावपि पटादेः प्रसङ्गात्। नन्वे-

---

१ "त्वाह्वयं वैजात्यमिति, पुस्तकान्तरे। २ 'संयोगेन घटादिर्न' पुस्तकान्तरे।
३ 'सर्वत्र कर्मणआरम्भकत्वादितएव द्रव्यत्वजातिः सिद्ध्यतीति तु न बोध्यम्, इति पुस्तकान्तरे।

कयापि तन्त्वादेः क्रियया तन्त्वादिभिरेव कैश्चित् सहारम्भकाणां कैश्चिच्चानारम्भकाणामुत्पत्तिदर्शनात्[1] तन्मात्रं न कारणम् । एतेनैवाभिमुख्यज्ञाने[2] विजातीयसंयोगप्रागभावो निवेश्य इति न कपालादौ तत्सम्भवः फलनियतत्वात् प्रागभावस्येत्यपि निरस्तम् । अपरतन्त्वादिष्वपि कालान्तरे विजातीयस्यैव संयोगस्योत्पत्स्यमानतया तत्प्रागभावस्यावश्यकत्वात् ।

नच स्वजन्यतज्जातीयप्रागभावत्वेन [3]स निवेश्यः तत्क्रियायाश्चापरतन्त्वादिषु न स इति वाच्यम्, [4]स्वजननयोग्यत्वस्य भविष्येष्वपि तज्जातीयेषु सत्त्वात् तदुपधानस्य च दुर्वचत्वात् । तस्मादाभिमुख्यविशेषसमवायान्यतरसम्बन्धेन [5]क्रियात्वेनैव कारणता तद्विशेषस्य च फलबलकल्प्यत्वेन अपरतन्त्वादिष्विव कपालादावपि [6]मानाभावेनाभावात् न प्रसङ्ग इति चेत् मैवम्, आभिमुख्यं हि नातिरिक्तः सम्बन्धः मानाभावात् । अभिमुखमिदमस्येत्यादिप्रतीतेश्च दूरस्थ[7]सूर्यचन्द्रादावपि सत्त्वात् तत्र च संयोगानुत्पादात् [8]लाघवमेव तत्र कल्प्यं [9]तत्क्रियात्रयेऽपि तदापत्तेः [10]समवायप्रवेशलाघवात् । किंचैवं यत्र यत्र नानुगतं सम्बन्धतावच्छेदकं तत्र सर्वत्रातिरिक्तः सम्बन्धः कल्प्येत । तस्मात् तत्तत्क्षणविशिष्ट[11]तत्तदुत्तरदेशव्यक्तित्वसमवायान्यतरसम्बन्धेन [12]विजातीयक्रियाया विजातीयसंयोगे कारणत्वमिति निष्कर्षः ॥

अथैवं परतन्त्वादिरूपोत्तरदेशानामिव कपालादीनामपि तत्सम्बन्धमध्ये निवेशाभावादेव न प्रसङ्ग इति चेत्, सत्यम् तथापि यत्र तत्कालीनतत्तद्व्योमादिसंयोगवति सर्वस्मिन्नेव तन्तौ [13]पटादेरारम्भकाः तद्वत्येव कपालादौ च अनारम्भकाः संयोगा एकयैव क्रियया जन्यन्ते तत्र तावत्तन्त्वादिव्यक्त्यन्यतमत्वमपेक्ष्य

१ "°रम्भकाणां संयोगानामुत्पत्ति' इति पुस्तकान्तरे । २ "ज्ञाने" इति स्थाने "स्थाने" इति पुस्तकान्तरे । ३ सन्निवेश्य इति पुस्तकान्तरे । ४ "जननयोग्यस्य भविष्येष्वपि" इति पुस्तकान्तरे । ५ "क्रियात्वेन" इति पुस्तकान्तरे । ६ 'मानाभावात्' इति पुस्तकान्तरे । ७ "सूर" इति पुस्तकान्तरे । ८ "लाघवेनैव तत् कल्प्यते" इति पुस्तकान्तरे । ९ "क्रियाश्रयेपि" इति पुस्तकान्तरे । १० "समवायाप्रवेशलाघवात्" इति पुस्तकान्तरे । ११ "देशविशिष्टव्यक्तित्वं" इति पुस्तकान्तरे । १२ विजातीयसंयोगकारणत्वमिति" एतावन्मात्रं पुस्तकान्तरे । १३ "पटारम्भकाः" इति पुस्तकान्तरे ।

लघुतया तत्कालीनं तद्वेमसंयोगवत्त्वादिकमेव [१]निवेश्यम्, तथाच तेन सम्बन्धेन तावति तन्त्वादाविव कपालादावपि तत्क्रियायाः सत्त्वाद् विजातीयसंयोगोत्पत्तेरावश्यकत्वात्। अथ तज्जातीयसंयोगं प्रत्येव तन्त्वादेः कारणत्वमस्तु तावतैव न पटादेः प्रसङ्गः इतिचेत्, विनिगमनाविरहात् पटादिकं प्रत्यपि कारणत्वात् इति दिक् ॥

एवं च जन्यजलादौ तादात्म्येन जलादेरपि कारणत्वमावश्यकम्। अन्यथा एकयैव जलादिक्रियया तद्दण्डादिसंयुक्तेषु जलादिषु तेजःप्रभृतिषु च[२] संयोगा जन्यन्ते। तत्र तत्कालीनतद्दण्डसंयोगवत्त्वादिसम्बन्धेन क्रियायास्तेजःप्रभृतिष्वपि सत्त्वेन विजातीयसंयोगस्यावश्यकत्वात् जलादेरुत्पादप्रसङ्गादितिनित्यसाधारणजलत्वादिसिद्धिः[३]। नच स्नेहादिकं प्रति स्वसमवायिसमवेतत्वेन[४] स्नेहादेरपेक्षया लाघवेन तादात्म्येन जलादेरेव कारणत्वं कल्प्यमिति तदवच्छेदकत्वेन जलत्वादिजातयः सिध्यन्तु इति वाच्यम्, तावता जन्यमात्रवृत्तिजातेरेव सिद्धेः ॥

नन्वेवं [५]जलपवनयोरवान्तरवैजात्येन अभ्युपगमाज्जलत्ववायुत्वे जाती सिध्येताम्, पृथिवीत्वतेजस्त्वे तु कुतः? [६]घटपटसौरचन्द्रादिविशेषेषु विशिष्य कपालतन्तुविजातीयतेजस्त्वादिना कारणतावश्यकत्वात् इतिचेत्, मैवम्। [७]पूर्वरीत्या हि यद्यनेकजातीयपार्थिवादेवारम्भकाः संयोगास्तदवयवस्यैकयैव क्रियया तदवयवान्तरेष्वेवानारम्भकास्तु[८] जलादिष्वेव जनिता नापरपार्थिवादिषु [९] तज्जातीयपार्थिवादिकं जलादिष्वपि [१०]जायते तद्वेमसंयोगवत्त्वादिसम्बन्धेन लघुना क्लृप्तकारणस्य [११]तत्क्रियायाः [१२]तदवयवेष्विव जलादिष्वपि सत्त्वेन तज्जातीय-

---

१ "°तत्स्थाने निवेश्यम्" इति पुस्तकान्तरे। २ 'च' इति पुस्तकान्तरे नास्ति। ३ 'सिद्धिरिति' इति पुस्तकान्तरे। ४ "समवेतत्वसम्बन्धेन" इति पुस्तकान्तरे। ५ 'जलपवनगौरवान्तरवैजात्यानभ्युपगमात्" इति पुस्तकान्तरे। ६ 'तत्र घटपट' इति पुस्तकान्तरे। ७ 'पूर्वोक्तरीत्या' इति पुस्तकान्तरे। ८ "°ष्विवानारम्भका" इति पुस्तकान्तरे। ९ 'तत्तज्जातीय' इति पुस्तकान्तरे। १० 'जायेत' इति पुस्तकान्तरे। ११ 'तत्तत्क्रियायाः इति पुस्तकान्तरे। १२ 'तत्तदवयवेष्विव इति पुस्तकान्तरे।

संयोगोत्पादस्यावश्यकत्वात्[१]। तथाच तदतिप्रसङ्गभङ्गार्थमनेकतत्तज्जातीयेषु[२] पार्थिवेषु तैजसेषु वा [३]तत्तज्जातीयावयवानां विशिष्य कारणत्वान्यपेक्ष्य लाघवेन जन्यपृथिवीं प्रति तादात्म्येन पृथिवीत्वेन जन्यतेजः प्रति तेजस्त्वेन कारणतयोरेव कल्पनात् तदवच्छेदकतया तयोः [४]सिद्धेः।

नच गन्धसमवायिकारणतावच्छेदकतयैव[५] पृथिवीत्वजातिः सिद्ध्यतु पाकजगन्धस्य परमाणावप्युत्पत्तेरितिवाच्यम्। समवायेन सुरभ्यादौ स्वसमवायिसमवेतत्वेन [६]सुरभ्यादेरवश्यकारणतयानतिप्रसङ्गे गन्धे पृथिवीत्वेनाकारणत्वात्। एवं शुक्लभास्वरसामान्ये तेजस्त्वेनापि[७] कारणतेति।

परेतु विरुद्धगन्धादिमदारब्धे सुरभ्यादेरनुत्पादेन सुरभ्यादावेकार्थसमवायेन क्लृप्तस्य प्रतिबन्धकस्य सुरभीतरगन्धादेः सुरभ्यभावादेर्वा अभावानां गगनजलपरमाण्वादिषु सत्त्वात् तत्रापि सुरभ्यादेरापत्तिवारणार्थं गन्धे पृथिवीत्वेन जन्यरसे पृथिवीजलोभयवृत्तिजात्या जन्यरूपे पृथिव्यादित्रयवृत्तिजात्या जन्यस्पर्शे भूतचतुष्कवृत्तिजात्या कारणताचतुष्टयावश्यकत्वेन [८]पृथिवीत्वजातिसिद्धिरित्याहुः।

तच्चिन्त्यम्। तावता समवेतवृत्तिसमवायेन कालिकसमवायोभयेन वा सम्बन्धेन जन्यरूपादिचतुष्कजातीये तादात्म्येन समवेतत्वेन कालिकविशेषणतया कार्यतावच्छेदकरूपेणैव वा कारणत्वस्यैकस्यैव कल्पयितुमौचित्यात्।

नच घटत्वादिकमादाय विनिगमनाविरहः, कार्यतावच्छेदकरूपे शीघ्रोपस्थितिकत्वलाघवस्य विनिगमकत्वात्।

नन्वेवमुक्तसम्बन्धेन सुरभ्यादिकं मा भूत् समवायेन जलपरमाण्वादौ तदनुत्पादः कथमिति चेत्। इत्थं [९]सुरभ्यभावादेर्हि [१०]पाकजव्यावृत्तमेव सुरभ्यादिवैजात्यं कार्यतावच्छेदकम्। अन्यथा अवयवावयविषु पूर्वं पाकान्नष्ट-

---

१ 'संयोगोत्पादावश्यकत्वात् इति पुस्तकान्तरे। २ "तज्जातीयेषु" इति पुस्तकान्तरे। ३ 'तज्जातीयावयवानां' इति पुस्तकान्तरे। ४ "सिद्धिः" इति पुस्तकान्तरे। ५ '°च्छेदकतया' इत्येव पुस्तकान्तरे। ६ रवश्यं 'कारणतानतिप्रसंगे' इतिपुस्तकान्तरे। ७ 'न कारणतेति' इतिपुस्तकान्तरे। ८ "जातिः सिद्ध्यतीत्याहुः" इति पुस्तकान्तरे। ९ सुरभ्यभावाभावादेर्हि" इति पुस्तकान्तरे। १० "पाकव्यावृत्तमेव" इति पुस्तकान्तरे।

गन्धेषु युगपदेव सुरभ्यादेरुत्पादेन व्यभिचारापत्तेः। तथाच विजातीयसुरभ्यादिकं प्रति समवेतवृत्तिसमवायेन [१]रूपादिविजातीयस्य व्यापकतया तत्सामान्यकारणस्य तत्र बाधात्।

अथ सुरभीतरगन्धादेः प्रतिबन्धकत्वे तदभावकार्यतावच्छेदकं पाकजसाधारणमेवास्तु नहि सुरभीतरगन्धादाववयवनिष्ठे विद्यमाने अवयविनि सुरभ्यादिः पाकात्। इत्थं च जलपरमाण्वादौ सुरभिसामान्यापत्तिर्दुर्वारेति[२] चेत् न सुरभीतरगन्धत्वाद्यपेक्षया लघुशरीरत्वादुक्त[३]कारणताचतुष्टयाकल्पनलाघवाच्च सुरभ्यभावत्वादिनैव प्रतिबन्धकत्वात् उभयोः प्रतिबन्धकत्वस्य वक्ष्यमाणत्वाच्च परिशिष्टमुपरिष्टात्।

इतश्च पृथिवीत्वं यत्र पटादौ पाकजनिकयैव तेजसः क्रियया जलादावपि संयोगाजनितास्ते च पूर्वरीत्या पाकात्मका एव स्वीकार्याः। तथाच जलादावपि [४]रूपनाशवारणाय लाघवात् पाकं प्रत्येव पृथिवीत्वेन कारणता। यदि च पाकत्वेन कार्यत्वे तेजसि व्यभिचारः, तेजःप्रतियोगित्वेन[५] तथात्वे जलादौ पाकसामान्यापत्तिरबाधितैव[६] गौरवं चेति विभाव्यते, तदा रूपादिचतुष्कजातीय[७]-नाशत्वेन विशेषणतया कार्यता।

वस्तुतस्तु तज्जातीयवृत्तिप्रतियोगितासम्बन्धेन द्रव्यवन्नाशत्वेन कार्यता। द्रव्यवत्त्वं च स्वसमवेतप्रतियोगिकत्वकालिकविशेषणताभ्यां समवेतत्वतज्जातीयत्वसम्बन्धाभ्यां पृथिवीत्वेन कारणतेति तदवच्छेदकतया लाघवेन सा जातिः सिद्ध्यतीति दिक्।

प्राचीनास्तु धूमं प्रत्यार्द्रेन्धनत्ववह्नित्वाभ्याम् आर्द्रेन्धनप्रभववह्नित्वेनैव वा कारणत्वम्। आर्द्रेन्धनत्वं च जलसंयुक्तपृथिवीत्वमिति तत्सिद्धिरित्याहुः।

तदर्थं च इन्धनारम्भकपरमाणुभिरेव धूमारम्भादार्द्रेन्धनजन्यवह्नेरपि

---

१ "रूपादिचतुष्कजातीयस्य" इति पुस्तकान्तरे। २ 'दुर्वारैवेति' इति पुस्तकान्तरे। ३ "कारणचतुष्टया" इति पुस्तकान्तरे। ४ 'रूपादि' इति पुस्तकान्तरे। ५ 'प्रतियोगिकपाकत्वेन' इति पुस्तकान्तरे। ६ 'रवारितैव' इति पुस्तकान्तरे। ७ "चतुष्टय" इति पुस्तकान्तरे।

संयोगेन अतिप्रसक्तत्वात् समवायेन धूमं प्रति संयोगेन जलत्ववह्नित्वाभ्यां तादात्म्येन पृथिवीत्वेन कारणतेति ।

नन्वेवं जलानलसंयुक्ते महतीन्धननाशावपि धूमः[1] स्यात् । आरम्भकसंयोगोपि घटादेः कपालादौ न दुर्लभः । तद्वैजात्यस्य धूमकारणतावच्छेदकत्वे तु किं जलपृथिवीवह्नीनां [2]कारणत्वैरिति चेत्, मैवम् । आरम्भकसंयोगवैजात्यस्यापि पूर्वरीत्यातिप्रसक्तत्वेन आद्यधूमेऽसमवेतपृथिवीत्वेन अनाद्यधूमे धूमत्वेन च तादात्म्येन कारणत्वात् । आद्यत्वानाद्यत्वे [3]धूमासमवेतत्वधूमसमवेतत्वे इति । पारमार्थिकस्तु [4]नयनाद्यवच्छिन्नत्वग्ग्राह्यो विजातीयः पाकजस्पर्श एव समवायेन धूमे हेतुः । स चेन्धननाशे सति पाकात् परमाणुषु जायते पाकविशेषएव जलानलादेरुपक्षयः[5] । द्व्यणुकादौ तु [6]अवयवक्रमेणैव । तेन नातिप्रसङ्गः । एवं दध्यादौ 'विजातीयरसादिरेव[7] हेतुः' । सोपि दुग्धाद्यारम्भकपरमाणुषु दुग्धादिनाशे पाकाज्जायते दधिद्व्यणुकादौ [8]तत्क्रमेणैवेति संक्षेपः ॥

संख्यादिपञ्चकवत्वं प्रत्येकं न द्रव्यलक्षणम् । संयोगविभागयोः सर्वत्राभावात् तयोः कर्माधीनत्वात् तस्य च अनावश्यकत्वात् इति ।

ननु कारणाकारणसंयोगस्य कार्याकार्यसंयोगजनकत्वात्[9] कपालाकाशादिसंयोगजो [10]घटादावाकाशादिसंयोगः सर्वत्रावश्यक[11] एव संयोगस्य संयोगजनकत्वे सर्वसम्मतेः । तन्तुकपालसंयोगानन्तरमुत्पन्नयोः घटपटयोः [12]कर्म विना कपालतन्तुत्वादिसंयोगस्य प्रत्यक्षत्वात् इति चेत्, मैवम् । क्वचिदसंयुक्तस्यापि द्रव्यस्य नाशात् । तथाहि यत्र कपालिकामेकामपहाय खण्डघटावयवसन्तानस्यानारम्भकसकलसंयोगप्रतिद्वन्द्विविभागजनकं कर्म कपालिकायां तस्यां चा-

---

१ "धूमोत्पत्तिः स्यात्" इति पुस्तकान्तरे । २ "कारणतयेतिचेत्" इति पुस्तकान्तरे । ३ 'च' इति पुस्तकान्तरे । ४ "नयनादवच्छिन्न" इति पुस्तकान्तरे । ५ "नलादिरूपक्षयः" इति पुस्तकान्तरे । ६ 'अवयवगुणक्रमेणैव' इति पुस्तकान्तरे । ७ 'विजातीयरसादिर्हेतुः' इति पुस्तकान्तरे । ८ 'च' इति परपुस्तकेऽधिकः पाठः । ९ "संयोगे" इति पुस्तकान्तरे । १० "संयोगे घटादा°" इति पुस्तकान्तरे । ११ '°वश्यकस्य' इति पुस्तकान्तरे । १२ 'कर्मणा' इति पुस्तकान्तरे ।

रम्भकसंयोगमात्रप्रतिद्वन्द्विविभागजनकं कर्म कस्यचित् कपालस्य तत्संयोगस्य वा नाशेन महाघटनाश इत्येकः क्षणः (१) ततोऽवस्थितेभ्य एव संयोगेभ्यः खण्डघटस्तदवयवसन्तानस्याकाशादिविभागास्तस्यां[१] कपालिकायामारम्भकसंयोग-मात्रविरोधी विभाग इतिद्वितीयःक्षणः (२) ततस्तदवयवसंस्थानस्य[२] आकाशादि-संयोगनाशः तस्यां कपालिकायामारम्भकसंयोगनाशः कार्याकार्यविभागजाः[३] कारणाकारणाकाशादिविभागाश्चेति तृतीयः क्षणः (३) इदानीं च न [४]घटे पूर्व-मात्रवर्तिभ्योऽवयवाकाशादिसंयोगेभ्यः संयोगाः सहभूतस्यैव समवायिनोऽसम-वायिनश्च[५] कारणत्वात्, ततस्तदवयवेष्वाकाशादिभिः संयोगास्तस्यां कपालि-कायां कपालनाशः आकाशादिसंयोगनाशश्चेति चतुर्थः क्षणः (४) इदानीमपि न संयोगास्तेषां प्रागसत्वात् ततोनु तदवयवेषु कर्मनाशो घटनाशश्च कपालिकायामा-काशादिभिः संयोगा इति पंचम क्षणः (५) इदानीमपि न संयोगः समवायिनो[६] विनाशात् । ततोऽनु कपालिकाकर्मनाशः[७] । तत्रासंयुक्तस्य द्रव्यस्य त्रिक्षणस्थायिनो नाशः कपालिकाकर्मणश्च पंचक्षणावस्थायिनः । यत्र चैवं कपालिकादिकर्म-तृतीयक्षणएव खण्डघटोत्पत्तिः तत्रासंयुक्तस्य द्विमात्रक्षणवर्त्तिनः खण्डघटस्य पंचक्षणवर्त्तिनश्च कर्मणो नाशः । एवं च विनश्यतोऽसमवायिनः कारणत्वेपि न क्षतिः । एवं यत्रानारम्भकसंयोगवत्योः कपालिकयोः कपालिकाभ्यामारम्भक-संयोगः तदनु कपालद्वयोत्पत्तिः तदनु [८]प्राक्तनकपालिकाद्वयसंयोगजः[९] कपालयोः स्वस्वानारम्भककपालिकासंयोगः तदनु तज्जन्यो घटारम्भकसंयोग इदानीमेव पूर्वक्षणे वा कथितरीत्या कपालिकादिकर्म तदनु महाघटोत्पत्त्यादिप्रक्रिया[१०], तत्र त्रिक्षणस्थायिनो द्विक्षणस्थायिनो वा महाघटस्यासंयुक्तस्य पञ्चक्षणवर्त्तिनश्च कर्मणो नाशः ॥

इति पृथिवीत्वाद्यसंयुक्तद्रव्यनाशदर्शनम् ॥

---

१ "विभागः तस्यास्" इति पुस्तकान्तरे । २ 'सन्तानस्य' इति पुस्तकान्तरे पाठः । ३ विभागजाश्च इति पुस्तकान्तरे । ४ 'न खण्डघटे' इति पुस्तका-न्तरे । ५ "नोऽपि" इति पुस्तकान्तरे । ६ "समवायिनो विनाशात्" इति स्थाने 'समवायि विनश्यतोऽकारणत्वात् इति पुस्तकान्तरे । ७ "कपालिका-कर्म नाशश्च" इति पुस्तकान्तरे । ८ प्राक्तनेति पुस्तकान्तरे नास्ति । ९ संयोगः' इति पुस्तकान्तरे । १० 'महाघटोत्पत्तिप्रक्रिया' इति पुस्तकान्तरे ।

इतश्च विभागजो विभागः। तथाहि यत्र कपाले तन्तुसंयोगप्रतिद्वन्द्वि-विभागजनकं कर्म घटश्च ततो घटे तन्तुकपालसंयोगजः संयोगः कपाले तन्तु-विभागश्च[1] तत्र विभागजविभागानभ्युपगमे तस्य घटतन्तुसंयोगस्य [2]समवायि-नाशं विना नाशो न स्यात्। द्रव्यनाशानाश्यसंयोगं प्रति विभागस्य नाशकत्वा-त्तस्याभावात् तन्तुघटयोरेकत्रापि क्रियाविरहात्। तदभ्युपगमे च तन्तुकपाल-विभागजनितेन घटतन्तुविभागेन घटतन्तुसंयोगनाश उत्पद्यत इतिध्येयम्॥

गुणत्वजातिश्च यद्यपि प्रत्यक्षतः सर्वत्र न सिद्ध्यति गुरुत्वादृष्टा-देरतीन्द्रियत्वात्। तथापि गुणपदशक्यतावच्छेदकतया सिद्ध्यति। नचैव-मत्तादिपदशक्यतावच्छेदकतयापि जातिः पाशचक्षुरादिषु [3]सिद्ध्यतीति वाच्यम्, पृथिवीत्वादिना संकरप्रसङ्गात्[4]। नचैवं विभुपदादिशक्यतावच्छेदकतया विभुचतुष्टये [5]जातेर्न्न सङ्करप्रसङ्ग इति वाच्यम्। बाधकविरहे च तत्सिद्धे-रिष्टत्वात् इतिप्राञ्चः॥

मध्यास्तु शक्यतावच्छेदकतया न जातिः सिद्ध्यति। भगवदिच्छायाः[6] शक्तेः सावच्छेदकत्वे मानाभावात्। अस्मात्पदादेतद्धर्मविशिष्टो बोध्य[7] एतादृश्या-[8]स्तद्धर्मग्रहाधीनग्रहत्वाच्च। अथ कारणतादेरपि तदवच्छेदकग्रहाधीन-ग्रहत्वात् तदवच्छेदकत्वेन जातिः[9] सिद्ध्यति कथमिति चेत्। इत्थं कारणता[10]-च्छेदकत्वं स्वरूपसम्बन्धविशेषरूपं सम्भवल्लघुनिष्ठं[11] शक्यतावच्छेदकत्वं तु शक्यत्वे शक्यवृत्तित्वे शक्योपस्थितिप्रकारत्वं सर्वतन्त्रसिद्धं तच्च गुरावपि न विरुद्धमिति [12]शेषः। तदुक्तमाचार्यैः—'अदृष्टत्वं नाम न सामान्यमस्ति कार्य-

---

१ 'विभागजश्च' इति पुस्तकान्तरे। २ 'तन्तु' इति पुस्तकान्तरे अधिकः सम्यक् पाठः। ३ 'सिद्ध्यतिविति' इति पुस्तकान्तरे। ४ 'संकरस्य बाध-कत्वात्' इति आदर्शमातृकायामासीत् तन्न समीचीनमिव प्रतिभाति। ५ जातिर्न सङ्करप्रशक्तिरिति पुस्तकान्तरे। ६ '°दिच्छात्मिकायाः' इति पुस्तकान्तरे। ७ 'बोद्धव्य' इति पुस्तकान्तरे। ८ '°स्तस्यास्तद्धर्म' इति पुस्तकान्तरे। ९ 'जातिसिद्धिः कथमिति चेत्' इति पुस्तकान्तरे। १० 'कारणादेरवच्छेदकं' इति पुस्तकान्तरे। ११ 'लघुधर्मनिष्ठ' इति पुस्तकान्तरे। १२ 'विशेषः' इति पुस्तकान्तरे।

कारणलक्षणानां तद्व्यवस्थापकानामभावादिति' वदन्ति ।

यत्तु शक्तिज्ञानस्य शक्यतावच्छेदकप्रकारकत्वेन पदार्थस्मारकतया गुरुधर्मस्य तथात्वे तत्रैव गौरवं स्यात् इति कारणतावच्छेदकतयेव शक्यतावच्छेदकतयापि [1]जातिः सिद्ध्यतीति । तत्तुच्छम् भ्रममादाय गुरुधर्मघटितेन रूपेण कारणता ध्रौव्येऽतिरिक्तं धर्मं परिकल्प्य तद्घटितरूपेणापि तत्कारणतायां लाघववैपरीत्यात् ।

साम्प्रदायिकास्तु तद्व्यक्तिनाशवत्त्वं तद्व्यक्तिसमवेतं प्रति तद्व्यक्तिनाशस्य नाशकत्वात् यद्यत्कपालादिव्यक्तिसमवेतानां [2]घटादीनामसमवायिनाशेन गुणानां रूपादीनामाश्रयनाशेनैव नाशः, तत्तत्कपालनाशस्य तत्तत्कपालसमवेतगुणनाशत्वमेव कार्यतावच्छेदकं, द्रव्यनाशे व्यभिचारवारणार्थं कालिकविशेषणतया तत्तत्कपालनाशवत्त्वेन तत्तत्समवेतस्य विशेषणे गौरवात् । अथ बुद्ध्यादिसाधारण्यं तज्जातेः कथमितिचेत् । इत्थं यथा जन्यज्ञानादिसमवायिकारणतावच्छेदकताया[3] सिद्धाया एव आत्मत्वजातेर्लाघवादात्मपदशक्यतावच्छेदकत्वाभ्युपगमेनैव परमात्मवृत्तित्वं तथा तज्जातेरपि गुणपदशक्यतावच्छेदकत्वाभ्युपगमादित्याहुः । तन्नादेयम् । [4]समवायिनाशकत्वस्य आश्रयव्यक्तिभेदेनाभिन्नस्यैव वक्ष्यमाणत्वात् इति ।

नूतनास्तु समनियतानां युगपन्नष्टानामेक एव नाशो लाघवात् । इत्थं च यद्यत्कपालादिमात्रसमवेतानां रूपादीनां युगपदेव नाशः । सच अनेकप्रतियोगिकोऽप्येक एव । तन्नाशव्यक्तेरन्यत्रापत्तिवारणार्थं न तेषां रूपादीनां प्रतियोगिनां विशिष्य कारणता मिथोव्यभिचारात् गौरवात् । नापि तत्कपालसमवेतत्वादिना तत्तद्घटादावव्याप्त्यापत्तेः । नहि घटादिकं रूपादिसमनियतं येन स नाशस्तत्रापि[5] इष्येत । किन्तु तत्तत्कपालादिसमवेतगुणत्वेन [6]आत्मत्वरीत्या सकलगुणवृत्तिगुणत्वजातिसिद्धिः ।

---

१ "°वच्छेदकजातिः' इति पुस्तकान्तरे । २ "घटादीनां समवाय्यन्तरादिनाशेन" इति पुस्तकान्तरे । ३ "°वच्छेदकतया' इति पुस्तकान्तरे । ४ "समवायिनाशनाशकत्वस्य' इति पाठान्तरम् । ५ पुस्तकान्तरे नास्ति । ६ 'इति' पुस्तकान्तरेऽधिकः पाठ ।

ननु तत्तत्कपालादिनाशोत्तरमवश्यं तदीयसंयोगनाशः, तस्य चातिरिक्तवृत्तितया अन्यत्र तन्नाशस्यापत्तिवारणार्थं संयोगव्यावृत्तगुणत्वेनैव कारणत्वमिति सर्वसाधारण्यं कथम्। नचासंयुक्तस्यापि द्रव्यस्य नाशान्न तदावश्यकमिति वाच्यम्, तथासति असंयुक्ते द्रव्यानुत्पत्त्या तत्कपालादिसमवेतत्वेनैव कारणत्वस्यादोषत्वादितिचेत्, सत्यम्, तथापि यत्र कपालिकयोरारम्भकसंयोगप्रतिद्वन्द्वी विभागः तत्कपालादौ च घटाद्यारम्भकानारम्भकसकलसंयोगविरोधिविभागजनकं कर्म ततः कपालिकाद्योरारम्भकसंयोगनाशः तत्कपालादौ च सकलसंयोगविरोधिनो विभागास्ततस्तत्कपालादिनाशः तत्कपालीयसकलसंयोगनाशश्च ततस्तत्कपालादिसमवेतानां संयोगभिन्नसकलगुणघटादीनां नाशः तत्र तत्कपालादिसमवेतगुणत्वेन कारणत्वं संयोगसाधारणेन न विरुद्ध्यते, द्वित्वद्विपृथक्त्वादिकं तु नावश्यकमिति प्राहुः। तन्न विभागाव्यावृत्तेः।

इति गुणत्वदर्शनम्॥

यद्यपि जन्यज्ञानसुखादिषु विशेषकारणावश्यकतयात्मनः कारणत्वे मानाभावः। तथापि धर्मविशेषं प्रति संयोगेन गंगादेः कारणतया घटशरीरादावपि समवायेन तस्य प्रसङ्गभङ्गाय अदृष्टत्वेनात्मत्वेन कार्यकारणभाव इत्यदृष्टतआत्मत्वसिद्धिरिति सम्प्रदायः।

नव्यास्तु विजातीयसुखादौ संयोगेनैव चन्दनादि कारणं नतु स्वसंयुक्तशरीरजनकधर्मादिना तादृशशरीरेण वा सम्बन्धेन गौरवात्। यदैव च तदात्मीयेन शरीरेण तदैव तेनात्मनापि संयुज्यते चन्दनादिकं नान्यदा मानाभावात्। विभुत्वे सकलमूर्तसंयोगित्वनियमस्य[१] कदाचित्[२] केनापि संयोगेन निर्वाहादसंयुक्तद्रव्यनाशाभ्युपगन्तृभिरेवानभ्युपगमाद् वा तेन नातिप्रसङ्गः। इत्थं च शरीरादावपि विजातीयसुखादावतिप्रसङ्गभङ्गाय बुद्ध्याद्यष्टकभावनावृत्तिजात्या सुखदुःखवृत्तिजात्या वा कार्यताया आत्मत्वेन कारणतायाश्च कल्पनमावश्यकमित्यात्मत्वं सिद्ध्यति। नचावच्छेदकतासम्बन्धेनापि विजातीयसुखादौ संयोगेन चन्दनादे-

---

१ नियम्यस्य" इति पुस्तकान्तरे। २ "कादाचित्केन संयोगेन इति पुस्तकान्तरे।

रेव हेतुत्वेनावच्छेदकतयात्मन्यपि तत्प्रसङ्गस्य भङ्गार्थं शरीरस्यापि कारणत्वं वाच्यमिति गौरवम्, मया तु चन्दनादेर्नात्मसंयोगोभ्युपगन्तव्य इति वाच्यम्, चन्दनकण्टकादिकारणतावच्छेदकेषु सहस्रशः शरीरजनकधर्माणां निवेशमपेक्ष्य तदेककारणतायामेव लाघवात्। चन्दनादिसंयुक्ते शवशरीरे प्रसङ्गभङ्गाय धर्मादि सम्बन्धेनात्मन एवावच्छेदकतया सुखादौ कारणतावश्यकतया त्वदुक्तप्रसङ्गवारणाद्वेति वदन्ति। तन्मन्दम्, धर्मादिकारणतयैव तदतिप्रसङ्गभङ्गात् तस्याश्च श्रुतिप्रामाण्यानुरोधेनावश्यकत्वादिति संक्षेपः।

कर्मत्वं तु मूर्त्तकार्यतावच्छेदकतया जातिः। कर्मजनकजातीयस्य संयोगस्य पूर्वरीत्या आकाशादौ सम्भवात् सजातीयप्रतिबध्यप्रतिबन्धकतावच्छेदकतया वा[१] तत्सिद्धिरिति दिक्।

रूपत्वादिकं तु गुरुमते चक्षुर्मात्रग्राह्यगुणत्वादिकम्, न तु जातिरूपम्, जातेः संस्थानमात्रव्यङ्ग्यत्वनियमेन द्रव्यभिन्नेनाभ्युपगमात्।

न्यायवैशेषिकमते तु तन्नियमस्यानभ्युपगमेन [२]कारणतावच्छेदकतया जातिरूपमेव।

प्राञ्चस्तु रूपत्वादिज्ञानमवश्यं चक्षुरादिज्ञानस्योपजीव्यम्। रूपाद्युपलब्धिः सकारणिका उपलब्धित्वात् स्पर्शोपलब्धिवत् [३]इत्याद्यनुमानेनैव तत्साधनात्। तथाचान्योन्याश्रयः। नच नीलोपलब्धिकरणं तैजसं स्पर्शाव्यञ्जकत्वे सति पीतव्यञ्जकत्वात् चन्द्राद्यालोकवत् इत्यनुमानेन चक्षुषि तैजसत्वं प्रसाध्य तैजसेन्द्रियग्राह्यगुणत्वरूपं[४] रूपत्वं सुग्रहमिति वाच्यम्। [५]'परमते' स्पर्शत्वस्यापि जातित्वाभावेन तत्रापि सुकुमारोपलब्धिकरणं[६] वायवीयं रूपाव्यञ्जकत्वे सति सुकुमारव्यञ्जकत्वात् इत्येवं त्वचि वायवीयत्वं प्रसाध्य वायवेन्द्रियग्राह्यगुणत्वरूपस्य[७] स्पर्शत्वस्य ग्रहस्वीकारे चक्रकप्रसङ्गात्।

---

१ पुस्तकान्तरे नास्ति। २ 'कारणताद्यवच्छे'' इति पुस्तकान्तरे। ३ 'इत्यादिनैव' इत्येव पुस्तकान्तरे। ४ °सेन्द्रियग्राह्यत्वरूपम्' इत्येव पुस्तकान्तरे। ५ पुस्तकान्तरे नास्ति। ६ "कारणम्" इति पुस्तकान्तरे। ७ "ग्राह्यत्वरूपस्य" इत्येव पुस्तकान्तरे।

नच तैजसत्वे सुकुमाराव्यञ्जकत्वं वायवीयत्वे च साध्ये नीलाव्यञ्जकत्वमेव हेतुविशेषणमतो नोक्तदोष इतिवाच्यम् । तदभिव्यञ्जकत्वं हि न तदभिव्यक्त्युपधानशून्यत्वं तस्य सहकारिसाहित्याभावाधीनतया पत्रादौ तन्निश्चयेऽपि व्यञ्जकत्वादिसंशयानिवृत्तेः, किन्तु तद्योग्यताशून्यत्वं तच्च तदवच्छेदकभावःग्रहाधीनग्रहं तदवच्छेदकं च लाघवात् स्पर्शत्वमहत्त्वादिकमेव इत्युक्तदोषस्तदवस्थ एवेति । तस्माज्जातिरेव रूपत्वादिकमित्याहुः ।

नव्यास्तु [१]प्रत्यक्षं प्रति नियमार्थं चाक्षुषादिकं प्रति चक्षुर्मात्रग्राह्येतरगुणत्वादिना तादात्म्येन प्रतिबन्धकत्वे स्पर्शादिः चक्षुरादिमात्रग्राह्येतर एव कुतो [२]न भवतीति प्रश्ने तत्र तादृशगुण एव यतो भवतीत्युत्तरस्यासम्भवः नियम्यस्यैव नियामकतालाभादिति रूपेतरगुणत्वादिनैव रूपत्वादिजातिघटितेन प्रतिबन्धकत्त्वं वाच्यमित्याहुः ।

नीलत्वादिकं गुरुमते न जातिः, एकैकानित्या एव हि नीलपीतारुणादिव्यक्तयः । ताभिरेवानुगताभिरनुगतप्रतीत्युपपत्तेः । नचैवं नीलादेर्जातित्वव्यवहारापत्तिः[३], असङ्कीर्णत्वस्य सत्ताशून्यत्वस्य वा तत्प्रयोजकत्वात् ।

नच नीलाद्यभेदे तारतम्यप्रत्ययो न स्यादितिवाच्यम् । तदितररूपासम्भेदगोचरत्वेन [४]तदुपपत्तेः । वस्तुतो नीलतरनीलतमादिव्यक्तयो विभिन्ना एव नित्याः । एतेन सम्भेददुर्वचत्वमपि प्रत्युक्तम् ।

अत्र न्यायवैशेषिके, नीलं नष्टं पीतमुत्पन्नमित्याद्यनुभवबलेन तेषामनित्यत्वात् नानात्वम् । नच [५]गुरुमते नीलगतपरम्परया समवायस्यैव नाशादिः प्रतीयते इतिवाच्यम् । साक्षात्प्रतीतेरौत्सर्गिकत्वेन भ्रमत्वस्यायोगात् । नच तदेवेदं नीलमित्यादिप्रत्यभिज्ञाबलादैक्यमिति वाच्यम् । तदेवेदमौषधमित्यादिप्रत्यभिज्ञाया इव तज्जातीयाभेदगोचरत्वादिति[६] प्राञ्चः ।

---

१ "प्रत्यक्षप्रतिनियमार्थम्" इति पुस्तकान्तरे पाठः । २ 'न' इति पुस्तकान्तरे नास्ति । ३ "जातित्वापत्तिः" इति पुस्तकान्तरे । ४ "तदुत्पत्तेः" इति पुस्तकान्तरे । ५ "गुरुमते" इति पुस्तकान्तरे नास्ति । ६ °गोचरत्वमिति" इति पुस्तकान्तरे ।

नव्यास्तु [१]कपालनीलादेः कार्यता नीलत्वादिना लाघवात्, न तु नील-समवायत्वादिना गौरवात्। अथ नीलादिषु समवायेन तत्र नीलत्वादिकमिव समवायेषु निरूपकतया [२]मम सा नीलादिव्यक्तिरवच्छेदिका वाच्या इति [३]न गौरवमिति चेत्, न विनिगमकाभावादुभयाभ्युपगमेपीष्टसिद्धेः ।

वस्तुतस्तु पाकस्य नाश्यतावच्छेदकं नीलसमवायत्वादिकं न कल्प्यते अनन्तत्वात् किन्तु रूपत्वादिकमेवेति प्राहुः ।

इति रूपत्वादिदर्शनम् ॥

एवं शब्दोप्यनित्यः उत्पत्तिविनाशप्रतीतेः । तत्र गुरुमते स एवायं गकार इत्यादिप्रत्यभिज्ञाबलेन पूर्वापरगकारयोरभेदे सिद्धे अर्थादेव नित्यत्वम् । तदाहुः—

"तावत्कालं स्थिरं चैनं कः पश्चान्नाशयिष्यति ॥"

इति उत्पत्त्यादिप्रतीतिश्च परम्परया व्यञ्जकं वायुमवलम्बते । साक्षात्प्रतीतिश्च भ्रान्तिरेव । प्रमात्वे अनन्तशब्दतद्ध्वंसकल्पनागौरवस्य बाधकत्वात् । [४]घटाद्युत्पत्तिस्तु नारम्भकसंयोगमालम्बते कण्ठताल्वादिव्यापारोत्तरं पूर्वापरगकारयोरिव कुलालादिव्यापारोत्तरं पूर्वापरघटाद्योरभेदप्रतीतेरभावात् प्रत्युत भेदस्यैव प्रतीतेः ।

यत्तु उत्पत्तिविनाशयोः [५]प्रतीतिमपेक्ष्य [६]प्रत्यभिज्ञानामल्पतया भ्रमत्वं युक्तमिति, तत्तुच्छम्, एकविषयप्रतीतीनामपि बाहुल्यसम्भवात् न्यूनाधिकभावस्य दुर्ग्रहत्वात् ।

अथ गकारादेरेकैकत्वे तारमन्दादिप्रतीतिर्न स्यात् एकधर्मिणि तुल्य-व्यक्तित्वभीत्याऽनेकजात्यसमावेशात् । मम तु कत्वादिव्याप्यतारत्वादेर्नानात्व-स्वीकारात् । नच विनिगमकाभावः, तारत्वादेर्नानात्वेपि स्वाश्रयसजातीय-

---

१ "पाकादेः" इत्येव पुस्तकान्तरे । २ "मम" इति पुस्तकान्तरे नास्ति । ३ "क्व" इति पुस्तकान्तरे । ४ "घटाद्युत्पत्तिप्रतीतिस्तु" इति पुस्तकान्तरे पाठः । ५ 'प्रतीती अपेक्ष्य' इति पुस्तकान्तरे । ६ 'प्रत्यभिज्ञायाम्" इति पुस्तकान्तरे ।

साक्षात्कारप्रतिबन्धकतावच्छेदकतावच्छेदकत्वेनानुगतेन' धर्मेण ताराकारानुगतप्रतीतेरुपपत्तेः। कत्वादिनानात्वे तादृशानुगमकाभावात् ककाराद्याकारानुगतप्रतीतेरनुपपत्तेर्विनिगमकत्वात्।

यत्तु तारत्वतारतरत्वमन्दत्वमन्दतरत्वादीनां चतुर्णां कत्वादिपञ्चाशद्व्याप्यत्वे जातीनां सार्द्धशतद्वयं वैपरीत्ये च चतुरधिकं शतद्वयं कल्प्यमिति विनिगमकम्। तत्तुच्छम्, तारतम्यस्यापि बहुविधस्यानुभवेन पञ्चाशत्त्वसम्भवेन तौल्यात्।

किञ्च कत्वादेर्नानात्वे तद्घटितसमभिव्याहारादिज्ञानकारणताबाहुल्यापत्तिः। नच तारसाक्षात्कारस्य मन्दबुभुत्साविरहविशिष्टस्य मन्दसाक्षात्कारं प्रति प्रतिबन्धकताबाहुल्यं तारत्वादिनानात्वे स्यादितिवाच्यम्, तत्प्रतिबन्धकतामपेक्ष्य गुरुशरीरसमभिव्याहारादिज्ञानकारणतायामतिगौरवस्य सोढुमशक्यत्वात्।

यद्वा तारसाक्षात्कारकाले मन्दस्यानुत्पत्तेरेवाग्रहात् न प्रतिबन्धकता कल्प्या, वायुसंयोगविशेषस्य फलबलकल्प्यत्वात् मन्दबुभुत्सायां तु मन्दस्योत्पत्तेर्ग्रहणोपपत्तेरितिचेत्, मैवम् विजातीयशब्दनियामकतया आवश्यकानां वायुगतवैजात्यानामेव तारत्वादिरूपतया भानात्। अन्यवायुधर्माणां श्रवणायोग्यत्वेऽपि तेषां तद्योग्यताभ्युपगमादिति तारत्वादयोऽखण्डोपाधिरूपा एव, तेषां तुल्यव्यक्तिकत्वेपि न क्षतिरित्येकदेशिनः। ध्वनिवैजात्यानामेव तारत्वादिरूपतया न श्रावणानुपपत्तिरिति तत्त्वम्।

अथ कश्रावणक्षणे गश्रावणं स्यात्, श्रोत्रसमवायसत्त्वादितिचेत्, न भवन्मते गकारोत्पादकस्येव मन्मते गव्यञ्जकस्य वायुसंयोगविशेषस्याभावादिति दिक्।

तत्र न्यायवैशेषिकनये तस्य व्यञ्जकत्वे [१]कत्वादिविषयकत्वप्रत्यक्षत्वयोर्मिथोविशेषणविशेष्यभावभेदेन गुरुतरानेककारणतापत्तिः। उत्पादकत्वे तु कत्वादिनैव कार्यत्वे लाघवम्, कारणतालाघवस्यात्यन्ताभ्यर्हितत्वात्।

---

१ 'कादि' इति पुस्तकान्तरे।

अथ [1]गश्रावणगतवैजात्यं तथास्त्विति चेत्, न तथापि मम लाघवात् तारत्वाद्यनाक्रान्तककारादेरलीकतया तारत्वाद्यवच्छिन्नं प्रति कारणतयैव [2]ककारादौ नियमनिर्वाहात्। तव तु तारत्वाद्यविषयककारादिप्रत्यक्षसम्भवेन तारत्वादिप्रत्यक्षं प्रति कारणतया कादिप्रत्यक्षस्यानुपपादनात्, कारणतान्तर-कल्पने गौरवात्, अवधिज्ञानविलम्बसम्भवात् श्रावणत्वव्याप्यानेकवैजात्य-कल्पनाच्च[3]। एतेन व्यवहार एवावधिज्ञानहेतुरित्यपास्तम्।

अथानन्तशब्दादिकल्पनापेक्षया कतिपयवैजात्यकल्पनमेव लाघवादिति चेत्, न यत्रानेकेषां चैत्रादीनामेकैकजातीयवर्णस्यैव श्रावणं तत्र भवन्मते व्यञ्जकीभूतचैत्राद्यात्मवायुसंयोगतद्ध्वंसादिकोटिकल्पनेन तुल्ययोगक्षेमत्वात्।

मन्मते तु अवच्छेदकतया कारणस्य नानाकर्णावच्छिन्नस्यैकस्यैवाकाशवायु-संयोगस्योपगमात्। अथ मयापि समानावच्छेदकत्वेनैवाकाशवायुसंयोगस्य व्यञ्जकत्वाभ्युपगमात् तत्रैक एव संयोगः स्वीकार्य इति चेत्, न प्रतिक्षणं कस्यचिदुत्पत्तिविनाशयोः सर्वसिद्धतया पदार्थान्तरस्य विनिगमनाविरहेण संयोगादेरनेकस्य तयोः कल्पनमपेक्ष्य ककारादेरेव तदुभयकल्पनस्य न्याय्यत्वात्, कल्पने विनिगमकानपेक्षणात् बाधकबलेनान्यत्र तद्द्वयाकल्पनादिति।

ननु कादिविषयकप्रत्यक्षत्वं वैजात्यं वा नावच्छेदकं किन्तु लौकिकविषय-तया खण्डकादिव्यक्तिरेव प्रतिक्षणमित्यादेरनभ्युपगमात् जात्यतिरिक्तपदार्थस्य किञ्चिद्धर्मावच्छिन्नभाननियमे मानाभावात् जातिपदस्याखण्डपरत्वाद्वा न कत्वादिप्रवेशः।

यत्तु विजातीयवायुसंयोगविरहे ध्वन्यभावादेव न कादिप्रत्यक्षम्, ध्वन्य-विषयककादिप्रत्यक्षस्यालीकतया ध्वनिं प्रत्येव वायुसंयोगोहेतुः न कादिप्रत्यक्षं प्रति इति। तन्न, सर्वत्र ध्वन्युत्पत्तौ मानाभावात्। कश्रावणकाले ध्वनिमात्र-श्रावणकाले वा गकारादिश्रावणापत्तेः।

---

१ 'कश्रावण°' इति पुस्तकान्तरे। २ 'ककारादिनियम°' इति पुस्तकान्तरे।
३ 'कल्पनगौरवाच्च' इति पुस्तकान्तरे।

यदपि मम कादीनामिव तव तत्प्रत्यक्षाणां कल्पनमिति तौल्यम् । तदपि न भवत्सम्मतप्रत्यक्षपूर्वक्षण एव मया व्यञ्जकसंयोगाभ्युपगमात् भवतापि तेषु क्षणेषु आत्मनि मानसप्रत्यक्षादिव्यक्त्यभ्युपगमेन वैषम्याच्चेतिचेत्, मैवं कादिव्यञ्जकविरहे कादिप्रत्यक्षत्वावच्छिन्नापत्त्यसम्भवेपि शब्दवृत्तिविषयतया श्रावणसामान्यस्य कादौ आपत्तिसम्भवेन कादिप्रत्यक्षत्वेनैव श्रोत्रसमवायकार्य्यताभ्युपगमे महागौरवात् । किञ्च मानसं प्रति श्रावणसामग्र्या विजातीयवायुसंयोगविशिष्टश्रोत्रसमवायत्वेन भवता प्रतिबन्धकत्वं कल्प्यम्, श्रोत्रसमवायस्य नित्यत्वात् । मया तु तत्तत्संयोगो व्यञ्जकत्वान्न निवेश्य इति श्रोत्रसमवेतशब्दत्वेनैव तथात्वाङ्गीकारात् इति ।

ननु श्रावणं प्रति सन्निकर्षो हेतुर्न्न वाच्यः अतिप्रसङ्गस्य व्यञ्जकसंयोगाभावादेवाभावादिति नायं[१] दोषः प्रत्युत तद्धेतुताङ्गीकारेण भवतामेव गौरवम् । एवं मानसादिकं प्रति व्यञ्जकस्यैव विजातीयत्वेन प्रतिबन्धकत्वं ननु तत्र सन्निकर्षस्यापि निवेशो व्यर्थत्वादिति न द्वितीयोपिदोषः । नच मानसे शब्दत्वविशिष्टश्रोत्रसमवायत्वेनैकमेव मन्मते प्रतिबन्धकत्वम्, भवन्मते तु व्यञ्जकवैजात्यभेदभिन्नमनेकमिति वाच्यम्, [२]कश्रावणमानसेच्छायां कश्रावणसामग्र्यां च सत्यामसत्यां च मानससामग्र्याम् [३] मानसोत्पत्त्युपपत्त्यर्थं [४]कश्रावणेच्छाविरहविशिष्टश्रोत्रसमवायत्वादिना कादिभेदभिन्नानेकप्रतिबन्धकत्वस्य भवतापि वाच्यत्वात् गौरवमतिरिच्यते ।

अथ कश्रावणेच्छाविरहविशिष्टत्वमानसेच्छात्वयोर्विशेष्यविशेषणभावभेदभिन्नप्रतिबन्धकताकल्पनमपेक्ष्य लाघवेन घटमानसं प्रति घटमानसेच्छाविरहविशिष्टशब्दत्वविशिष्टश्रोत्रसमवायत्वेन श्रावणान्यज्ञानं मानसं वा प्रति कश्रावणेच्छाविशिष्टकत्वविशिष्टश्रोत्रसमवायत्वेन च प्रतिबन्धकताद्वयमध्ये आद्यं मम न कादिभेदेन भिन्नं भवतान्तु मानसेच्छाविरहविशिष्टविजातीयत्वेन

---

१ "नाद्योदोषः" इति पुस्तकान्तरे । २ 'ग' इति पुस्तकान्तरे । ३ "गश्रावणसामग्र्याम्" इति पुस्तकान्तरे । ४ कश्रावणेच्छाविरहविशिष्टमानसेच्छाविरहविशिष्टकत्वविशिष्ट" इति पुस्तकान्तरे समीचीनः पाठः ।

प्रतिबन्धकत्वं विभिन्नं वैजात्यभेदेन तदिति चेत्, न कादिव्यञ्जकवृत्तिव्यापकजातिविशेषस्य [1]तत्प्रतिबन्धकताङ्गीकारात् ममापि तत्र भेदाभावात्। किञ्च पुरुषातिप्रसङ्गभङ्गाय तत्पुरुषीयमानसे तादृशतत्पुरुषीयकर्णावच्छिन्नश्रोत्रसमवायत्वेन पुरुषभेदभिन्नं [प्रति] प्रतिबन्धकत्वं भवता वाच्यं मया तु व्यापकवैजात्येन एकमेव सर्वपुरुषसाधारणं तद्वाच्यम् अतिप्रसङ्गस्य फलबलकल्प्यविजातीयव्यञ्जकासत्त्वादेव भङ्गादिति चेत्, मैवम्। भवन्मते ध्वनेरनित्यतया तद्ग्रहार्थं सन्निकर्षहेतुत्वस्यावश्यकत्वात् तस्य चोक्तक्रमेण विशिष्य [2]कार्यकल्पने गौरवस्य दुर्वारत्वात्। यदितु ध्वनिवृत्तिविषयतया श्रावणं प्रति ध्वनित्वविशिष्टश्रोत्रसमवायत्वेन हेतुत्वं वाच्यमतो नाभिहितसामान्यापत्तिरिति विभाव्यते तथापि मन्मते लाघवं संयोगं प्रति विशिष्य तत्त्वेनोत्तरदेशस्य हेतुतयाऽऽकाशरूपोत्तरदेशस्य भवन्मते विनिगमनाविरहेण तत्त्वं ककारादिरूपमपि वाच्यम्, तथाचानेककारणतापत्तिः। मन्मते तत्परिमाणादिमात्ररूपं तत्त्वम्, तथा कारणतावच्छेदकविशिष्टसत्त्वस्य कार्य्यप्रागपेक्षणीयत्वेन कादेः कादाचित्कतयाऽवच्छेदकत्वासम्भवात्। एतेन तत्पुरुषीयश्रावणं प्रति अवच्छेद्यतासम्बन्धेन तत्पुरुषीयकर्णत्वेन हेतुत्वम्। तथा च मयापि न वायुसंयोगानां व्यञ्जकत्वं कल्प्यम्, तेषामसत्त्वेऽव्याप्यवृत्तेरवच्छेदकतया एवासत्त्वाङ्गीकारान्न प्रसङ्ग इति परास्तम्, स्वरूपसम्बन्धरूपावच्छेदकताया अव्याप्यवृत्तित्वस्य वक्तुमशक्यत्वादतिरिक्तायाः स्वीकारे शब्द एव धर्म्मविशेषं कल्पयित्वा तद्विशिष्टत्वेन हेतुत्वस्य कल्पनौचित्यात् [3]तदादिकमादाय विनिगमनाविरहश्चेति ॥

ननु स्वोत्तरोत्पन्नविभुविशेषगुणो योग्यविभुविशेषगुणानां नाशकः तत्र सत्त्वाननुगमात् शब्दस्थले तत्तद्व्यक्तित्वेन नाशकताकोटिकल्पनगौरवमितिचेत्, न अनुगमस्य वक्ष्यमाणत्वात्, शब्दवृत्तिप्रतियोगितया नाशं प्रति विषयतया श्रावणत्वेन कारणत्वेन ध्वनिस्थलोभयसिद्धे तेनैव सर्वशब्दनाशोपपत्तेश्च।

---

१ 'तत्प्रतिबन्धकतावच्छेदकता' इति पुस्तकान्तरे समीचीनः पाठः। २ 'कार्यत्व' इति पुस्तकान्तरे समीचीनः पाठः। ३ "हस्तादिक" इति पुस्तकान्तरे सम्यक् पाठः।

यदि चाश्रूयमाणोपि शब्दोभ्युपगम्यते ध्वनिरपि वा भवता नित्य इति तथापि नातिरिक्तकल्पना, अतीन्द्रियशून्यमहापरिमाणवदन्यासमवेतगुणवृत्तिप्रतियोगितया नाशं प्रति स्वप्रागभावाधेयत्वसामानाधिकरण्यकालिकविशेषणतात्रितयसम्बन्धेन स्वाधिकरणध्वंसवृत्तित्वतादात्म्योभयसम्बन्धेन वा तादृशगुणत्वेन कारणता। स्वपदार्थः सम्बन्धमध्ये न निविशते संयोगादिवदेकप्रागभावादेरपरसम्बन्धत्वाभावात्। अतीन्द्रियशून्यत्वम् अदृष्टादिव्यावृत्त्यर्थं गुणविशेषणम्। रूपसंयोगादिव्यावृत्त्यर्थं महापरिमाणवदन्यासमवेतत्वमुपात्तम्। अथात्ममात्रवृत्तिद्वित्वादेर्नाशः स्यादितिचेत् ,न तत्र प्रत्यक्षवारणाय क्लृप्तप्रत्यक्षप्रतिबन्धकतावच्छेकातीन्द्रियवैजात्यवत्त्वादितिदिक्।

परेतु शब्दस्य नित्यत्वे घटपदत्वादिकं दुर्वचं स्यात्, तद्धि घाव्यवहितोत्तरटत्वादिरूपम्। अव्यवहितत्वञ्च घाधिकरणसमयध्वंसाधिकरणसमयध्वंसानधिकरणसमयवृत्तित्वघटितम्, तच्चासम्भवि समयमात्रस्यैवतादृशध्वंसाधिकरणत्वात्।

न च स्वाव्यवहितत्वस्य स्वत्वघटितत्वेन भवन्मतेपि तदनुगतं दुर्वचनमिति वाच्यम्, स्वाधेयप्रागभावप्रतियोगित्वकालिकविशेषणतोभयसम्बन्धेन घटवत्त्वादेरेव घटपदादिरूपत्वात् स्वपदार्थस्य सम्बन्धित्वेन अप्रवेशात्। अथ 'घ' प्रत्यक्षवत् 'ट' प्रत्यक्षत्वादिरूपं तत् उक्तरीत्या सुवचमितिचेत् , न तदपेक्षया घत्वटत्वादेर्लघुत्वात् तावत्तस्यानुरोधेन [१]घटादेर्भेदावश्यकत्वात् इति प्राहुः।

इति शब्दानित्यत्वदर्शनम्।

विभिन्नजातीयनीलपीतादिरूपवदवयवारब्धे अवयविनि नानैव नीलपीतादिरूपाणि जायन्ते समवायेन नीलादिकं प्रति स्वसमवायिसमवेतत्वेन कारणस्य नीलादेः सत्त्वात् नीलेतररूपादेः प्रतिबन्धकत्वे मानाभावात्, गौरवात्। तानि चाव्याप्यवृत्तिनीलपीतादिमदवयवावच्छेदेन जायन्ते, व्याप्यवृत्तित्वे पीतावयवाद्यवच्छेदेन चक्षुःसंयोगे नीलादेः चाक्षुषप्रसङ्गात्।

---

१ "घादे" इति पुस्तकान्तरे।

एवं च "लोहितो यस्तु गात्रेण मुखे पुच्छे च पाण्डुरः" इति स्मृतौ गात्रमुखाद्यवच्छेदेन लोहितादिसत्त्वमर्थः सम्मुखः सङ्गच्छते, सप्तम्या अवच्छिन्नत्वार्थकत्वात्। तथा च अवच्छेदकतासम्बन्धेन नीलादिकं प्रति नीलादिकं सजातीयं कारणमिति न पोताद्यवयवावच्छेदेन नीलादेरुत्पादः। अवच्छेदकतया जन्यरूपे च समवायेन द्रव्यमपि कारणमिति नीलादिमति नान्त्यावयविनि न वाऽनारब्धद्रव्येऽवयवे तत्सम्बन्धेन नीलादेरुत्पादः। तत्रैव च अवच्छेदकतया सजातीयरूपम्प्रतिबन्धकमिति न नीलादिसन्तानप्रसङ्गः। नीलमात्रारब्धादौ[1] जायमानस्य[2] नीलादेः व्याप्यवृत्तेरवच्छेदकतयाऽवयवे प्रसङ्ग-भङ्गार्थं च स्वाश्रयसमवेतद्रव्यसमवायेन नीलाभावादिः कारणमिष्यताम्वा सर्वावयवेऽवच्छेकतया तत्र[3] नीलादेरुत्पन्नत्वं यदि न प्रतीतिविरोधः। नचोक्तचाक्षुषप्रसङ्गः, अव्याप्यवृत्तिलौकिकविषयतया चाक्षुषं प्रति संयोगा-वच्छेदकावच्छिन्नसमवेतत्वलक्षणसन्निकर्षेण चक्षुषः कारणताया अन्यत्र कर्मादिचाक्षुषस्थल एव क्लृप्तत्वात् व्याप्यवृत्तिवृत्तिविषयतया ज्ञानं प्रति व्याप्यवृत्तित्वेन तादात्म्येन कारणत्वान्तरस्यापि तत्रैव क्लृप्तत्वाच्च न द्रव्यसमवेत वृत्तिलौकिकविषयतया चाक्षुषसामान्यस्य चक्षुःसंयुक्तसमवायकायस्य तत्र प्रसङ्गः। द्रव्यसमवेतं हि द्विविधमेव व्याप्यवृत्तित्वमव्याप्यवृत्तित्वं च। तच्चाक्षुष-योरेकतरस्यापि तत्र कारणस्याभावात्। अव्याप्यवृत्तित्वं च अविच्छिन्न समवायसम्बन्धेन वृत्तिमत्त्वं तदभावश्च व्याप्यवृत्तित्वमिति प्रोक्तं प्रत्यक्षीये। एवमवच्छेदकतया तद्व्यक्तिसमवेतं प्रति समवायेन अवयवावयवतदवयव-निष्ठतत्तत्परम्परान्यतमसम्बन्धेन वा तत्तद्व्यक्तीनामपि कारणत्वं तत्रैव क्लृप्तम्। अतो न नीलकपालादौ पटीयनीलादेः प्रसङ्गः।

ननु यत्र कपालादिरवयव एव नीलपीतादिमत्कपालिकादिभिरवयवैरारब्ध-स्तत्रावयविनि घटादौ पीतकपालिकामात्राद्यवच्छेदेन चक्षुःसंयोगवति नीलादेः चाक्षुषस्य प्रसङ्गः। तदारब्धकपालादेर्नीलादिचक्षुःसंयोगोभयावच्छेदकत्वात्

---

१ "नीलमात्रावस्थादौ" इति पुस्तकान्तरे। २ "जायमानव्याप्यवृत्तेरवच्छेद-कतयाऽवयवे प्रसंगभंगार्थम्" तवावन्मात्रं पुस्तकान्तरे। ३ 'तत्र' इति पुस्तकान्तरे।

नहि तत्कपालादिकं न नीलादेरवच्छेदकमिति वक्तुं शक्यम् सामग्रीसत्त्वात् । अवच्छेदकतया नीलादौ स्वसमवायिसमवेतत्वेन नीलेतररूपादेः प्रतिबन्धकत्वे समवायेन तदभावस्य सहभावेन कारणत्वे वा गौरवापत्तेः । सजातीयप्रतिबन्धकतया नीलकपालिकादेस्तदनवच्छेदकतया तदवच्छेदकस्यैव गवेषणीयत्वापत्तेर्वा इति चेत्, मैवम्, तस्य कपालादेर्नीलाद्यवच्छेदकत्वेपि चक्षुःसंयोगानवच्छेदकत्वाभ्युपगमात् पीतकपालिकादेरेव तथात्वात् । कथमन्यथा एकाङ्गुल्यां चक्षुःसंयोगवति शरीरे अपराङ्गुल्यवच्छिन्नस्य कर्म्मणो न चाक्षुषं तदङ्गुलीसमवेतपाणेरुभयावच्छेदकत्वात् । चक्षुःसंयोगावच्छेकत्वं वाऽनवच्छिन्नं ग्राह्यम् । एवञ्च तत्कपालपाण्यादेः चक्षुःसंयोगावच्छेदकत्वेऽपि तस्य पीतकपालिकैकाङ्गुल्याद्यवच्छिन्नत्वान्न क्षतिः । ननु एवं नीलकपालिकादिमात्रावच्छेदेन चक्षुःसंयोगादपि तत्र घटादौ नीलादिचाक्षुषं न स्यात् नीलकपालिकादेस्तन्नीलाद्यनवच्छेदकत्वात् तत्कपालादेश्चानवच्छिन्नचक्षुःसंयोगावच्छेदकत्वाभावात् । न च कर्म्मतुल्यत्वमितिवाच्यम्, तत्र पाण्यपराङ्गुल्यवच्छेदेन शरीरे पराङ्गुल्यवच्छेदेन पाणौ च युगपदेव कर्म्मोत्पत्त्या चक्षुःसंयोगशरीरकर्म्मणोरपराङ्गुल्यवच्छिन्नत्वसत्त्वात् । अत्र च कपालघटाद्योः क्रमेण नीलादेरुत्पत्त्या कपालिकादौ घटनीलादेः सजातीयप्रतिबन्धकवशादुत्पत्त्यसम्भवादिति चेत्, न नीलकपालिकादेरवच्छेदकतया नीलादेरुत्पत्त्यसम्भवेपि सत्तायां बाधकाभावात् उत्पत्तिनिरूपकसम्बन्धेन कार्य्यस्योत्पत्त्यधिकरण एव सत्त्वमिति नियमे मानाभावात्, संयोगादिना सम्बन्धेन घटादेरुत्पत्त्यभ्युपगमात्, तेन चान्यत्रापि सत्त्वात् । एवं रसगन्धस्पर्शानामपि नानात्वमव्याप्यवृत्तित्वं च बोध्यमिति प्राचीना वदन्ति ।

इति रूपाव्याप्यवृत्तित्वदर्शनम् ॥

मध्यास्तु व्याप्यवृत्तीन्येव तत्रापि नीलादीनि जायन्ते । नीलादिचाक्षुषं प्रति चानवच्छिन्ननीलावच्छिन्नसंयोगवत्समवेतत्वादिसन्निकर्षेण चक्षुषः कारणतया पीतकपालाद्यवच्छेदेन चक्षुःसंयोगवति घटादौ [1]न नीलादेश्चाक्षुषप्रसङ्गः । उक्तपीतकपालिकाद्यवच्छिन्नस्तु चक्षुःसंयोगो नानवच्छिन्ननीलकपालिकाद्य-

१ 'न' पुस्तकान्तरे नास्ति ।

वच्छिन्न इति नोक्तातिप्रसङ्गोपि। नच नीलादौ चाक्षुषस्य द्रव्यसमवेतवृत्ति-विषयतया सामान्यतः प्रसङ्गः दुर्वार इति वाच्यम्, रूपान्यवृत्तिविषयतया [1]चाक्षुषादौ रूपभेदस्यापि कारणान्तरस्यैकस्याभ्युपगमात्। द्रव्यसमवेतं हि द्वयं रूपमन्यच्च तयोरेकतरस्यापि प्रत्यक्षसामग्रीविरहात्। नीलादिभेदेन सजातीय-कारणतानां परम्परया नीलाभावादिकारणतानामवच्छेदकतया जन्यरूपे समवायेन द्रव्यस्य कारणतायाः सजातीयप्रतिबन्धकतायाश्चापेक्षया नीलादिभेदेन चक्षुः-सन्निकर्षकारणतानां रूपभेदकारणतायाश्च कल्पनेऽत्यन्तलाघवात्। नच नीलादि-वृत्तिविषयतया चाक्षुषमुक्तं चक्षुःसन्निकर्षवति संख्यादावपिजायेत। तादात्म्येन नीलत्वादिना कारणतान्तराणां कल्पने तत्सन्निकर्षमध्ये नीलत्वादिनिवेशे वा विपरीतमेव गौरवमिति वाच्यम्, अवच्छेदकतया [2]तत्तन्नीलादिव्यक्तीनामननुगता नन्तकारणतानामकल्पनेन मम तथाप्यतिलाघवात्। किञ्च त्वन्नये [3]तत्तन्नील-कपालिकादौ घटनीलादेः सत्तायामुत्पत्तिरावश्यकी आद्यक्षणसम्बन्धस्यैवोत्पत्तित्वात् उत्पत्तिनिरूपकसम्बन्धेन चोत्पत्तेः कार्य्यस्य कारणं विनानुपपत्तौ सत्तायाअप्यनुप-पत्तेः। कालिकविशेषणतातिरिक्तकार्यतावच्छेदकसम्बन्धेन कार्योत्पत्तिसत्तायाः समनियमात् संयोगस्य कार्य्यतानवच्छेदकत्वाभ्युपगमात्। अवच्छेदकता-सम्बन्धेनोत्पत्तिप्रतीतिरपि तादृशनीलकपालकपालिकादौ घटनीलादेः समानैव तस्मान्नावच्छेदकतया जन्यरूपत्वेन रूपत्वेन न प्रतिबध्यप्रतिबन्धकभावः नापि तद्द्रव्यसमवेतजन्यत्वेन तद्द्रव्यसमवेतत्वेन तथाभावः, तदवयवावच्छेदेन [4]संयोगादिरूपाद्यनुत्पादप्रसङ्गात्। अपितु तत्तद्द्रव्यसमवेतरूपत्वेन तादृशरूप-त्वेन वाच्यः। इत्थञ्च द्रव्यव्यक्तीनामानन्त्यात् कारणतानन्त्यम्। एतेन नील-चाक्षुषादौ सन्निकर्षकारणतानां प्रत्येकं नीलादिचैत्रादिभेदेन भेदे त्वन्नयेऽतिगौरवम्।

नच समवायेन नीलचाक्षुषं प्रति नीलाद्यवच्छिन्नसंयोगवच्चाक्षुषेनादृष्ट सम्बन्धेनकारणत्वम्, अतो न पुरुषभेदाद्भेद इति वाच्यम्। तथासति नील-

---

१ 'चाक्षुषं प्रति' इति पुस्तकान्तरे। २ "तत्तन्नीलादिव्यक्तीनां देशनियमार्थं तत्तत्प्रागभावव्यक्तोनाम्" इति स्तकान्तरे पाठः। ३ 'तत्रनील°' इति पुस्तकान्तरे। ४ 'संयोगादिमति रूपाद्यनुत्पादप्रसंगात्' इति पुस्तकान्तरे।

कपालाद्यवच्छेदेन घटचक्षुःसंयोगादितः पटनीलादिचाक्षुषस्यापत्तेः । तत्तन्नीलचाक्षुषादौ तत्तन्नीलवत्संयोगवच्चक्षुष्ट्वादिना हेतुत्वे च नीलव्यक्तिभेदेन भेदादानन्त्यापत्तेरिति परास्तम् । नीलत्वादिजातिचैत्राद्यात्मोभयभेदभिन्नत्वेपि तत्तद्द्रव्यभेदभिन्नानन्तकारणतापेक्षया लाघवात् । वस्तुतोनास्माकं नीलादिभेदेन सन्निकर्षकारणता भिद्यते । तथाहि रूपवृत्तिविषयतया चाक्षुषं प्रति निरवच्छिन्नसंयोगावच्छेदकत्ववत्तालक्षणप्रत्यासत्या चक्षुष्ट्वेन कारणता वाच्या । तद्वत्त्वं च स्वनिरूपकसंयोगसमवायिसमवेतत्व स्वसमवेतवृत्तिरूपत्वव्याप्यधर्म्मसमवायाभ्यां बोध्या । तत्र निरवच्छिन्नं घटादिचक्षुःसंयोगावच्छेदकत्वं पीतकपालिकादावेव न तु तदारब्धकपालादौ तस्य पीतकपालिकाद्यवच्छेदेन तदवच्छेदकत्वमुक्तसन्निकर्षस्याभावात् न घटनीलादेः, आद्यसम्बन्धनिवेशान्न पटनीलादेः, द्वितीय सम्बन्धनिवेशान्न घटपीतादेश्चाक्षुषमिति[1] ध्येयम् । तस्मादस्मन्मतेऽत्यन्तलाघवमिति । एतेनावच्छेदकतया सजातीयप्रतिबन्धकत्वं न कल्प्यं समवायेनैव तेन निर्वाहात् । समवायेनोत्पत्तिं विनाऽवच्छेदकतयोत्पत्तेरलीकत्वादिति ममलाघवमित्यपास्तम् । मम सन्निकर्षकारणतागौरवाभावात् तवावच्छेदकदेशनियमार्थमनुगतप्रागभावकारणतानन्त्यगौरवस्य दुस्सहत्वात् ।

नचावच्छेदकतया तत्तद्व्यक्तिवृत्तिकार्यं प्रति तत्तद्व्यक्तेः कारणतया अन्यत्र क्लृप्तयैव निर्वाह इति वाच्यम्, दूषितप्रायत्वात् । इतिस्मृतेस्तु स्वसमवायिसमवेतत्त्वेन परम्परासम्बन्धेन गात्रमुखादिवृत्तिलोहितादिरूपवत्त्वमर्थः । एवं रसगन्धस्पर्शानामपि तत्र नानात्वं व्याप्यवृत्तित्वञ्च बोध्यमिति प्राहुः ।

इति नानारूपादिव्याप्यवृत्तित्वदर्शनम् ॥

सम्प्रदायस्तु चित्राख्यं नीलादिभ्योऽन्यजातीयमेकमेव रूपं तत्र जायते पटश्चित्रः, पटे चित्रं रूपमिति प्रतीतेः । नच समानदेशकालवृत्तिनानाजातीयरूपवत्त्वमेव तद्विषयः तादृशनानाजातीयत्वस्य[2] दुर्वचत्वात् । सुवचत्वेपि नानारूपव्यक्तितद्ध्वंसादिकल्पने गौरवात् ।

---

१ 'चाक्षुषापत्तिरिति' इति पुस्तकान्तरे । २ 'जातीयस्य' इति पुस्तकान्तरे ।

अथ तत्र पटादौ नीलपीतादिप्रतीतेः कागतिरिति चेत्, [१]परम्परया-ऽवयवनीलादिविषयकत्वं [२]साक्षात्सम्बन्धावगाहिन्याश्च तस्याः भ्रमत्वं व्यक्ति-कल्पनगौरवस्याबाधितचित्रप्रतीतेश्च [३]प्रमात्वे बाधकाभावात्। एतेन स्मृतिगति-रप्युक्ता।

अथैवमवयवी नीरूप एवास्तु। रूपवत्त्वप्रतीतिस्तु परम्परामवगाहता-मिति चेत्, न, तस्य चाक्षुषानुत्पादप्रसङ्गात्। परम्परया च न रूपं तत्र हेतुः तस्याननुगमात्। रूपादीनां त्र्यसरेणावेव विश्रामापत्तेः।

एवं स्पर्शोऽपि चित्रः, निस्पर्शत्वे स्पार्शनप्रत्यक्षानुपपत्तेः। विभिन्न-जातीयगन्धरसवदारब्धे तु निर्गन्धत्वं नीरसत्वं द्रव्यस्य घ्राणरसनाभ्यामग्रह-णात्। तत्र तादृशबाधकाभावात्। षड्रसा हरीतकीत्यादिप्रतीतिस्तु परम्पर-यैवोपपादनीया। ननु तथापि तत्र नीलादिकं कथन्न जायते न गुणविरोधात्। तद्धर्थोहि नीलादिकं प्रति नीलाद्यभावस्य नीलेतररूपादेर्वा प्रतिबन्धकत्वम्। नाद्यः तत्रह्येकावयवावच्छेदेनावयविनि पाकात्तदेकावयवावयविनो र्नीलादिनाश इत्येकः क्षणः (१) ततस्तत्रैकावयवे पीतादीति मध्यमः क्षण (२) ततोऽवयविनि चित्रमिति तृतीयः क्षणः (३) तत्र मध्यमक्षणेऽवयविनि पाकजं पीतं स्यात्। अवयवावयवि-पाकयोर्यौगपद्यात्। द्वितीयावयवे पीताद्यभावस्य सत्त्वेपि पाकजव्यावृत्त-(पीतादिवैजात्यावच्छिन्नं प्रत्येव प्रतिबन्धकत्वात्। अन्यथायुगपदेवावयविनोः पाकात्पीतादेरनुत्पादापत्तेः नहि पाकजे पीतादौ)[४] पीतादिजनकजातीयपाका-भावः सामानाधिकरण्येन[५] प्रतिबन्धकावयवपीतेऽनुवर्तमाने अवयवान्तरावच्छे-देन [६]पाकादवयविनि पीतादेरनुत्पादापत्तेः। नचेष्टापत्तिः, क्षणं विलम्ब्यावयव-पीतेनैव तदुत्पादोपपत्तेरितिवाच्यम्, यत्र त्र्यसरेणुशर्करादावियं पाकप्रक्रिया तत्र घटादौ चिरबिलम्बेन रूपान्तरोत्पादापत्तेः। नापि द्वितीयः, तत्रैव तदैवावयवा-

---

१ 'परम्परया नीलादि' इति पुस्तकान्तरे। २ '°सम्बन्धेनावगाहिन्याश्च' इति पुस्तकान्तरे। ३ 'प्रमाबाधकत्वात्' इति पुस्तकान्तरे। ४ एतच्चिह्नितः पाठः पुस्तकान्तरे नास्ति। ५ "प्रतिबन्धकः एकावयवपीतानुमाने वर्त्तमाने" इति पुस्तकान्तरे। ६ "पाकादाववयविनि" इति पुस्तकान्तरे।

न्तरनीलादितो नीलाद्युत्पादापत्तेः तत्र काप्यवयवे नीलेतररूपादेरभावात्। नच रूपनाशकजनकपाकयोर्भेदाभ्युपगमे जन्यरूपे रूपनाशकपाकस्य प्रतिबन्धकता वाच्या, तन्नाशानन्तरमुत्तररूपोत्पत्त्युपपत्तेरितिवाच्यम्, तथापि तृतीयक्षणे पाकात्पीतादेर्नीलादितो [1]नीलादेश्चोत्पत्त्यापत्तेरिति चेत्, मैवम्[2] उक्तयोरुभयोरपि प्रतिबन्धकत्वाभ्युपगमात्। इतश्च न [3]नीलरूपत्वं नीलादौ नीलान्यरूपादेरिव नीलान्यरूपादौ नीलादेरपि प्रतिबन्धकतानां विनिगमनाविरहेणाभ्युपगमे गौरवात्।

यद्वा नीलादौ नीलेतररूपादिः सामान्यतः पाकजभिन्नरूपे च समवायेन पाकः सामानाधिकरण्येन रूपसामान्याभावो वा प्रतिबन्धकः कल्प्यः। पाकजभिन्नत्वं [4]तत्तज्जातिमद्भेदकूटवत्त्वम्। इत्थं च नाशकजनकपाकयोरभेदेपि न क्षतिः। विनश्यदवस्थपाकेनैव रूपान्तरस्योत्पत्त्यभ्युपगमात् न [5]क्षणिकत्वादिकम्। एवञ्च तत्रावयवे पीताद्युत्पत्तिक्षण एवावयविन्यपि पाकादेव चित्रमिति मतेपि न क्षतिः। अपाकज नीलादेः पाकेन पाकजपीतादेश्च [6]पीतेतररूपादिना प्रतिबन्धादनुत्पत्तेः। तथाच नीलाद्यभावो न प्रतिबन्धको नवा नीलादिकं कारणमिति गगनपटलादौ तन्नीलाद्यापत्तिवारणार्थं जन्यरूपादौ सामानाधिकरण्येन रूपादेः पृथिव्यादित्रयादिवृत्तिजात्या तादात्म्येन पूर्वोक्तं कारणताचतुष्टयं निर्दोषमेव नीलाद्यभावप्रतिबन्धकतानामपेक्षया लाघवात्। यदितु नीलेतररूपादेरभावस्य सहभावेन नीलादौ कारणत्वं स्वीक्रियते, तदा तावतैव निस्तारः। एवं [7]नीलपीतोभयारब्धजातीयचित्रादौ नीलेतरपीतेतरतज्जातीयेतररूपादेरभावोऽपि कार्यसहभावेनैव कारणम्। तेनैकावयवे पाकजरक्ताद्युत्पत्तिक्षणेऽवस्थितावयवद्वयवृत्तिनीलपीतादिद्वयादवयविनि तज्जातीयचित्ररूपोत्पत्तिप्रसङ्गोऽपि निरसनीयः। नतु तदर्थपाकस्य रूपाभावस्यैवाप्रतिबन्धकतेति ध्येयम्।

यत्तु विजातीयतेजःसंयोगात्मकस्य पाकस्य फलबलकल्प्यतया तत्रावयवे पाकोत्पत्त्यग्रिमक्षणेऽवयविनि पाकोत्पत्तिः तत्र क्रमेणैव पूर्वरूपनाशो रूपान्तरो-

---

१ "पीतादेर्नीलादेश्चोत्पत्त्यापत्तेरिति चेत्" एतावन्मात्रं पुस्तकान्तरे। २ "मैवम्" इति पुस्तकान्तरे नास्ति। ३ "नीरूपत्वम्" इति पुस्तकान्तरे। ४ 'तत्तज्जातिकूटवत्त्वम्' इत्येव पुस्तकान्तरे। ५ 'क्षणिकत्वम्' इति पुस्तकान्तरे। ६ 'पीतेतररूपत्वदिना' इति पुस्तकान्तरे। ७ "नीलपीतोभयान्यजातीय इति पुस्तकान्तरे।

त्वादश्च स्वीकार्य्यः । तथा च प्रथमक्षणे पाकस्याभावान्न मध्यमक्षणे पाकात्पीतादिकमिति नीलाद्यभावप्रतिबन्धकतामात्रेण निस्तार इति । तत्तुच्छम्, तथापि तृतीयक्षणे पाकात् पीताद्यापत्तेः पीतेतररूपादेरवश्यं प्रतिबन्धकत्वाभ्युपगमात् । किञ्च पूर्वरीत्यावयवावयविनोः पाकयोरेकयैव क्रियया जननात्क्रमासम्भवः, किन्तु यौगपद्यमेव । क्रियान्तरादिकल्पने गौरवात् । एतेनैव रूपस्य नाशक एवावयविनि पाकः स्वीकार्यो नतु पीतादेर्जनकः, कल्पकस्य फलस्याभावात् इति न पीतादेस्तत्रापत्तिरित्यपि परास्तम् । नाशकजनकपाकयोरभेदस्योपपाद्यत्वाच्च ।

कश्चित्तु, रूपादिचतुष्टयजातीयस्यैकपाकनाश्यत्वात् नीलादौ नीलाभावविशिष्टं तज्जातीयप्रतिबन्धकम् । न च नीलेतरत्वादिकं साक्षाद्रूपविशेषणम्, नीलाभावादिवैशिष्ट्यं च तज्जातीये सामानाधिकरण्येनेति गौरवमितिवाच्यम्, तज्जातीयसम्बन्धमध्ये स्वसमवायिनि साक्षादेव वैशिष्ट्यस्य निवेशादित्याह । तच्चिन्त्यम्, [१]प्रत्येकरूपादिनाशकत्वस्य दर्शयिष्यमाणत्वात्, तथाच नीलादिसामान्यं[२] प्रति प्रतिबन्धकतायां पाकविशेषस्थले व्यभिचार इति ।

नूतनास्तु नीलादितारतम्यानामानन्त्यात्तत्तदवच्छिन्नं प्रति तत्तदवच्छिन्नेतररूपत्वादिना[३] अनन्तप्रतिबन्धकतासु इतरत्वरूपाभावत्वादीनां निवेशमपेक्ष्य लाघवात् तत्तज्जातीयं प्रति एकार्थसमवायेन तत्तज्जातीयमेव कारणमिति समवायिकारणत्वनियमरक्षापि । चित्रेतर रूपं प्रति च चित्राभावस्य कार्यसहभावेन कारणत्वम् । तेन चित्रक्षणे न नीलादिप्रसङ्गः । उक्तस्थले चावयवपीताद्युत्पत्तिक्षण एवावयविनि चित्रं पाकजं नतु तदग्रिमक्षणे रूपं तेन न मध्यमक्षणे पीताद्यापत्तिरपीति । गन्धरसयोस्तु चित्रत्वाभावादुक्तक्रमेणैव प्रतिबन्धकत्वम् । अस्तु वा तत्रापि चित्रत्वं लाघवात् द्रव्यस्यापि समवायिनि पर्याप्त्याख्य सम्बन्धाभ्युपगमे स्वसमवायिपर्य्याप्तत्वेन नीलादिकमेवं पाकेऽपि कारणमिति न गुणविरोधकल्पनमित्यपि मतमिति प्राहुः ॥

इति गुणविरोधदर्शनम् ।

---

१ "प्रत्येकम्" इति पुस्तकान्तरे । २ "नीलादिसामाना धकरण्यप्रतिबन्धकतायाम्" इति पुस्तकान्तरे । ३ "रूपादिना" इति पुस्तकान्तरे ।

ननु चित्ररूपाभ्युपगमे[१] चित्रं प्रति [२]कारणत्वमनुगतं दुर्वचमिति गौरवमिति चेत्, न फलमुखत्वात्। स्वसमवायिसमवेतत्वेन नीलनीलेतररूपत्वादिना [३]"पञ्चकारणतानां सुवचत्वाच्च नीलतरनीलतमाभ्यामपि चित्रोत्पादे तु तत्तज्जातीयेतररूपत्वादिना" कारणता जातिभेदेन भिन्ना वाच्या। नचैवं गौरवम्, एकैकजातीयानामनन्तानामवयविनि रूपाणां तन्नाशव्यक्तीनां च कल्पनमपेक्ष्यात्यन्तलाघवादिति केचिदाहुः।

[४]नव्यास्तु चित्रं प्रति रूपत्वेनैव विजातीयचित्रं प्रति नीलपीतोभयादेर्विशिष्य कारणत्वमित्याहुः।

यत्तु चित्रेतररूपाभावः कार्यसहभावेन चित्रसामान्यं प्रति कारणमिति तत्र मते चित्रेतररूपं प्रति चित्राभावस्य कार्यसहभावेन कारणत्वमिति न गुणविरोधो निर्वहति। यत्र हि नीलाद्युत्पद्यते तत्र चित्रमेव स्यात्, यत्र वा चित्रं तत्र नीलाद्युत्पद्येत। परस्परं प्रति परस्पराभावस्य तथा कारणत्वेऽन्योन्याश्रयात् नियामकालाभादित्यन्यत्र विस्तरः।

नूतनास्तु चित्रं प्रति रूपविशिष्टरूपत्वेन स्वसमवायिसमवेतत्वेन कारणता एकैव। वैशिष्ट्यं च स्वसमवायिसमवेतद्रव्यसमवायिसमवेतत्वस्वविजातीयत्वोभयसम्बन्धेन निविष्टम्। स्वविजातीयत्वं च स्ववृत्तिचित्रत्वान्यजातिभिन्नजातिमत्त्वं चित्रत्वान्यत्वेन [५]चित्रभिन्नवृत्तित्वेन वा जातेर्विशेषणाच्चित्रवदवयवद्वयारब्धे न व्यभिचारः। यदि च [६]भेदप्रतियोगितावच्छेदकघटकतया स्वपदार्थस्य निवेशे [७]अत्यन्ताऽननुगम इति चिन्त्यते, तदा स्वविजातीयत्वं स्ववृत्तिभेदप्रतियोगितावच्छेदकधर्मसमवायः प्रवेश्यः। न च व्यभिचारः, चित्राभाववच्चित्रत्वस्य कार्यतावच्छेदकत्वात्। तद्वत्त्वं च स्वाश्रयसमवेतसमवेतत्वेन। चित्रवच्चित्रं प्रति च चित्रत्वेन कारणतान्तरम्। चित्रनीलादिमदवयवाभ्यामारब्धे कारणद्वयसत्त्वादार्थः समाज इति।

---

१ 'चित्ररूपाद्युपगमे' इति पुस्तकान्तरे। २ 'कारणमनुगतम्' इति पुस्तकान्तरे। ३ एष चिह्नितः पाठः पुस्तकान्तरे नास्ति। ४ 'मध्यास्तु' इति पुस्तकान्तरे। ५ 'चित्रावृत्तित्वेन' इति पुस्तकान्तरे। ६ 'भेदप्रतियोगिताघटकतया' इति पुस्तकान्तरे। ७ 'अत्यन्तानुगमः' इति पुस्तकान्तरे।

एवं च गुणविरोधोऽपि चित्रेतररूपं प्रति रूपविशिष्टरूपत्वेनैव प्रतिबन्धकत्वमेकमेव। तदभावस्य सहभावेन कारणत्वाच्च न प्रागुक्तमध्यमक्षणेऽवयविनि पाकात् पीतादिनीलादितो वा नीलादि जायते। एतेन स्पर्शोऽपि व्याख्यातः।

एवं रसं गन्धं प्रति रसविशिष्टरसत्वेन गन्धविशिष्टगन्धत्वेन प्रतिबन्धकत्वमेकैकमेव द्रष्टव्यम्। ननु विभिन्नजातीयचित्रविशेषेषु [1]नीलपीतोभयादीनां विशिष्य कारणतावश्यकत्वे किं सामान्यकारणत्वेन। अस्तु वा चित्रं प्रति रूपत्वेनैव हेतुत्वमिति चेत्, न [2]नीलपीतरक्तादित्रयारभ्यचित्रोत्पत्तिस्थले नीलपीतादिद्वयारभ्यजातीयचित्रवारणार्थं तत्तज्जातीये तदुभयेतरतत्तज्जातीयेतररूपाभावादेः कारणत्वकल्पनात् नीलाद्येकजातीयवदारब्धे तत्तज्जातीयप्रसङ्गवारणार्थं तत्तदुभयारभ्यजातीयेषु पृथक् तत्तदुभयादीनामनेककारणतानामपेक्षया चित्रसामान्ये प्रोक्तैककारणताया लाघवेन कल्पनात् त्रितयारभ्यजातीयेषु पुनस्त्रयाणां विशिष्य कारणत्वमावश्यकमेव। अन्यथा द्वयारभ्यचित्रस्थलेऽपि तदापत्तेः, त्रितयेतररूपाभावस्य [3]रूपवद्रूपस्य च सत्त्वादिति तस्मादतिरिक्तचित्रपक्ष एव श्रेयानित्याहुरिति संक्षेपः।

इति चित्रकारणतादर्शनम्॥

ननु नीलादिमदवयवमात्रावच्छेदेन चक्षुःसंयोगे चित्रस्य प्रत्यक्षापत्तिः। नच [4]विजातीयनानारूपवदवयवावच्छिन्नसंयोगवत्समवायलक्षणसन्निकर्षेण चक्षुश्चित्रचाक्षुषे कारणमिति वाच्यम्, अनुगतस्य विजातीयनानात्वस्य दुर्वचत्वात् इति चेत्, मैवम्, [5]चित्रवृत्तिविषयतया चाक्षुषं प्रति नीलेतररूपवत्पीतेतररूपवदादिभिरवच्छिन्नस्य संयोगस्य कारणप्रत्यासत्तौ निवेशात् चित्रभिन्नचाक्षुषे चित्रभेदस्य कारणान्तराच्च न [6]सामान्यकल्पनापत्तिः। एवं नीलपीतोभयारभ्यविजातीयचित्रविशेषचाक्षुषं प्रति नीलपीतादिमदुभयावच्छिन्नत्वमिति। ननु

---

१ 'नीलभेदोभयादीनाम्' इति पुस्तकान्तरे। २ 'नीलपीतरक्तारब्ध' इति पुस्तकान्तरे। ३ 'रूपवद्रूपाभावस्य' इति पुस्तकान्तरे। ४ 'विजातीयनानारूपवदवच्छिन्नसंयोग°' इति पुस्तकान्तरे। ५ 'चित्रविषयतया' इति पुस्तकान्तरे। ६ 'सामान्यरूपेणापत्तिः' इति पुस्तकान्तरे।

विभिन्नजातीयचित्रविशेषवच्चाक्षुषेषु कारणानां कल्पने गौरवमिति चेत् , न फल-मुखत्वात् प्रामाणिकत्वाच्चेति ।

एकदेशिनस्तु, तत्र नीरूपत्वाभ्युपगमेच चाक्षुषत्वानुपपत्तिर्बाधिका चाक्षु-षादौ रूपादेः कारणतायां विवादात्, विजातीयैकत्वादेरेव तत्र कारणत्वसम्भवा-दित्यन्यत्र विस्तरः ।

तस्मात् साक्षाद्रूपवत्त्वप्रतीतिबलादेव रूपवत्त्वम् । इत्थञ्च नीलादिनाना-रूपवत्त्वप्रतीतिबलान्नानारूपाणि स्वीकार्याण्येव । यदि च तथैव चित्रप्रतीति-रस्ति, तदा तत्र [1]रूपविशिष्टरूपमेवावगाहते । वैशिष्ट्यञ्च सामानाधिकरण्यस्ववि-जातीयत्वाभ्यामिति । अस्तु वा तत्र चित्रमपि [2]प्रतीतेरेव सर्वविषयव्यवस्थाप-कत्वादिति फलमुखगौरवस्यादोषत्वेऽपि न क्षतिरिति संक्षेपः ।

इति चित्ररूपदर्शनम् ॥

पीलुपाकवादो वैशेषिकाणाम् । पाकः परमाणुष्वेव जायते नावयविनि, मानाभावात् । तत्र पूर्वरूपादिनाश आश्रयनाशादुत्तररूपोत्पत्तिरवयवरूपादेरेव, आश्रयान्तरे द्व्यणुकादेराघटाद्यन्तं नाशस्य [3]पुनरन्योत्पादस्य चाभ्युपगमात् । [4]पाकेन नाश्यता न्यायरीत्यैव ।

तेषामयं भावः, न्यायनये यत्रैकावयवावच्छेदेनैवावयविनि पाकात् तदे-कावयवावयविनोर्नीलनाशस्तदवयवे[5] पाकजं पीतं ततश्चावयविनि चित्रं जायते, तत्र द्वितीयक्षणेऽवयविनि पाकात् पीतम्, अवयवान्तरनीलाच्च नीलं जायते । नच नीलाद्यभावस्य नीलादौ जन्यरूपमात्रे रूपसामान्याभावस्य वा सामानाधि-करण्येन प्रतिबन्धकत्वात् न जायते इति वाच्यम्, अवयवावयविनोर्युगपदेव नीलादेः पाकादुत्पत्तेस्त्वयोपगमात् व्यभिचारात् । न चापाकजनीलादौ नीला-द्यभावस्य नीलादिमात्रे च नीलेतररूपादेः प्रतिबन्धकतया न तत्र नीलं पीतं वेति

---

१ 'रूपविशिष्टं रूपमेव नावगाहते' इति पुस्तकान्तरे । २ 'प्रतीतेर्वा' इति पुस्तकान्तरे । ३ 'पुनरन्यस्योत्पादस्य' इति पुस्तकान्तरे । ४ 'पाकनाश्यता' इति पुस्तकान्तरे । ५ 'ततस्तत्रावयवे' इति पुस्तकान्तरे ।

वाच्यम्, तव नीलेतररूपादिप्रतिबन्धकतानां[1] कल्पने गौरवात् । मन्नये चित्रस्थले नीलादिवारणाय [2]पाकजनीलादौ नीलाद्यभावस्यातथात्वात्[3] इत्येको दोषः ।

द्वितीयस्तु यत्र नीलपीतशुक्लारब्धेऽवयविनि नीलावयवावच्छेदेन पाकात् तदवयवावयविनोर्नीलरूपनाशस्ततो द्वितीयक्षणे तदवयवरक्तोत्पत्तौ तृतीयेऽवयविनि रक्तपीतशुक्लेभ्यश्चित्रोत्पत्तिः, तत्र द्वितीयक्षणे पीतशुक्लाभ्यां चित्रं जन्येत । नच चित्रत्वसामान्यस्यावश्यं नियम्यतया तदवच्छिन्नस्वाश्रयसमवायित्वेन कार्यता समवायेन पृथिवीरूपत्वेन रूपत्वेन वा कारणता वाच्येति सर्वावयवे रूपस्याभावात् न तदा चित्रं जायते इति वाच्यम्, तथापि रूपवदवयवद्वये तदापत्तेरवारणादिति ।

तृतीयस्तु विनश्यदवस्थे पाकाद्घटादौ नाशक्षणे विशेषणताविशेषवद्रूपनाशापत्तिवारणाय कार्यकाले कार्यदेशवृत्तितया पाकस्य नाशकत्वं कल्प्यमिति गौरवम् ।

तुरीयस्तु यत्र पाकादेकत्रैव नीले रक्तं नीलादिक्रमेण जायते, तत्रोत्तरनीलादेः [4]पूर्वनीलाद्युत्पत्तिकालेऽतिप्रसङ्गभङ्गाय तत्तत्क्षणस्य तत्तत्पाकस्य तत्तन्नीलादिध्वंसादेर्वा कारणत्वं कल्प्यम् । मन्नये चाश्रयभेदाद्देशनियामकेनैवातिप्रसङ्गभङ्गान्न [5]तत्कल्पनमिति ।

इह पिठरपाकवादिनो नैयायिकाः, बहुतद्द्रव्यगुणकर्मतद्ध्वंसादीनां कल्पनमपेक्ष्य नीलादौ नीलेतररूपादेर्नीलाभावादेश्च [6]चित्रे रूपाभावस्य सामानाधिकरण्येन [7]प्रतिबन्धकतादावेव लाघवात् [8]विनश्यदवस्थ्यपाकानभ्युपगमाच्च न तृतीयो दोषः । चतुर्थोऽपि न, [9]पाकस्थलीयतत्तद्द्व्यणुकादिद्रव्यादिव्यक्तिषु

---

१ '°प्रतिबन्धकतायाम्' इति पुस्तकान्तरे । २ 'अपाकजनीलादौ' इति पुस्तकान्तरे । ३ 'नीलाद्यभावस्यैवतथात्वात्' इति पुस्तकान्तरे । ४ 'पूर्वनीलाद्युत्पत्तिकाले' इति पुस्तकान्तरे पाठः । ५ 'अतिप्रसंगभंगात्तत्कल्पनमिति' इति पुस्तकान्तरेऽसम्बद्धः पाठः । ६ 'चित्रेतररूपाभावस्य' इति पुस्तकान्तरे । ७ 'प्रतिबन्धकताया एव' इति पुस्तकान्तरे । ८ 'विनश्यदवस्थे पाकानभ्युपगमाच्च' इति पुस्तकान्तरे । ९ पाकस्थलीयचतुरणुकत्र्यणुकादिद्रव्यादिव्यक्तिषु' इति पुस्तकान्तरे ।

तत्तत्संयोगादीनां कारणतानामनुगतानां त्वया कल्पने तुल्यत्वात् । यद्वा जन्यरूपं प्रति स्वप्रतियोगिविशिष्टसमवेतत्वस्वाश्रयसमवेतत्वोभयसम्बन्धेन रूपाभावस्य प्रतिबन्धकताकल्पनेनैव दोषद्वयस्य निरासः । अथवा नैतत्प्रतिबन्धकतापि कल्प्या, पाकस्य विजातीयसंयोगात्मकस्य फलबलकल्प्यतयाऽवयवावयविनोर्युगपदुत्पत्तौ मानाभावेनावयविनि नीलनाशक्षणे पीतजनकपाकानभ्युपगमादेव न द्वितीयक्षणे पाकजं पीतमिति नाद्यो दोषः । अवयवनीलनाशक्षणेऽवयविनि नाशकपाकानभ्युपगमेन सजातीयप्रतिबन्धान्न द्वितीयक्षणे त्रितयजन्यचित्रसामग्र्या प्रतिबन्धान्न तृतीयक्षणे वा पीतशुक्लजन्यं चित्रं जायत इति न द्वितीयो दोष इत्याहुः ।

ननु माभूदवयविनाशः, मास्तु रूपनाशे द्रव्यं प्रतिबन्धकम्, मास्तु सर्वदिगवच्छिन्नत्वापेक्षापि पाकस्य, अस्तु वा निविडयोरेव समानदेशत्वविरोधात् तत्सम्भवोऽपि, तथापि अवयविनि न पाकजं रूपं नीलादिजन्यतावच्छेदक नीलादिवैजात्यकल्पनापत्तेः । किन्तु नीलजमेव, पाकजं तु परमाणावेव । नच परमाणुरूपोत्पत्त्या व्यभिचारस्य वारणाय वैजात्यमावश्यकमिति वाच्यम्, नहि समवायेन जन्यता किन्तु स्वसमवायिसमवायेन नीलत्वेनैव सामान्येन समवायेन तेनैव जनकत्वस्याभ्युपगमात् । भवता युगपदेवावयवावयविनोः पाकात् रूपोत्पत्त्यभ्युपगमेनैव [1]वक्तुमशक्यत्वात् । नचैवं भवतां चित्रस्थलेऽव्याप्यवृत्तिनानारूपाभ्युपगमपक्षे व्यभिचारः, कालादिव्यावृत्तव्यावच्छेदकताविशेषस्य स्वाश्रयसमवायावच्छेदकतोभयस्य वा [2]कार्यतया [3]तस्मिन्पक्षे त्वयेव मयापि वाच्यत्वात् । नचैवं व्याप्यवृत्तिनीलादेरसंग्रहेण तत्र कारणतान्तरकल्पने गौरवम्, तस्याप्यवच्छेदकत्वस्वीकारे क्षतिविरहात् । अन्यथाऽवच्छेदकतया[4] नीलादौ स्वाश्रयसमवेतद्रव्यसमवायेन नीलाभावादेः कारणत्वस्य कल्पने गौरवापत्तेः । नचावच्छिन्नत्वप्रत्ययाभावात् प्रामाणिकं गौरवम्, सर्वस्मिन् कपाले नीलो घट इत्यादिप्रतीतेः सर्वानुभवसिद्धत्वात् अनवच्छिन्नमिदं नील-

---

१ 'वक्तुमशक्यं व्यभिचारात्' इति पुस्तकान्तरे समीचीनः पाठः ।
२ 'कार्यसम्बन्धतया' इति पुस्तकान्तरे । ३ स्तकान्तरे 'तस्मिन् पक्षे' इति पाठो नास्ति । ४ 'त्वयाऽवच्छेदकतया' इति पुस्तकान्तरे ।

मित्यादिप्रतीत्यसिद्धेः । अथैवमनारब्धद्रव्येऽपि परमाण्वादौ स्वसमवायिसमवायेन नीलादेः प्रसङ्गः कस्यचिद्द्व्यणुकादेस्तदानीं समवायिकारणस्याभावात् सम्बन्ध्युत्पत्तिसामग्र्याः सम्बन्धोत्पत्तावप्रयोजकत्वात् व्यभिचारित्वात् । अतिविशेषकारणतानां सर्वत्रानभ्युपगमेनैव सामान्यकारणतानां व्यवस्थापनादिति चेत्, न स्वसमवायिसमवायेन जन्यसत्त्वेन द्रव्यत्वेन कार्यकारणभावात् । नचैवं गौरवम्, स्वसमवायिसमवायेन नीलादेः कारणत्ववादिना त्वयाऽपि क्लृप्तस्य समवायेन जन्यसति तादात्म्येन द्रव्यत्वेन कारणत्वस्य मया कल्पनात् इत्येकदेशमतमाश्रीयतामिति चेत्, मैवम्, नीलारब्ध एव नीलं पीतारब्ध एव पीतं समवायेन जायत इत्यत्र नियामकाभावात् । नच स्वसमवायिसमवायेनोत्पत्तिं[1] विना समवायेन नीलाद्युत्पत्तेरलीकतया पीतादाववयवे तत्कारणविरहादेव न पीताद्यारब्धे नीलादिकमिति वाच्यम्, नीलादावेवावयवे[2] स्वाश्रयसमवायेनोत्पद्यमानस्य नीलादेः पीताद्यारब्धे द्रव्ये समवायेनोत्पत्तौ बाधकविरहात् पीताद्यारब्धघटादिव्यक्तिघटितोक्तसम्बन्धेनैव नीलकपालादौ नीलादेरापत्तेः । मया स्वसमवायिसमवायिसमवायादिपरम्परावत् स्वसमवायिसमवायस्योत्पत्त्यनिरूपकत्वेन तेनोत्पत्तेरनियम्यत्वात् । अन्यथा परम्परयाऽप्यतिप्रसङ्गात् कपालिकादाविव कपालादावपि घटादिरूपमुत्पन्नमित्याद्यप्रतीतेरिति ।

ननु न [3]नीलादौ नीलादेः कारणत्वं वाच्यम्, किन्तु स्वाश्रयसमवेतत्वेन नीलाद्यभावस्य प्रतिबन्धकत्वमेव पाकजभिन्ने रूपे रूपादिचतुष्कजातीये वा समवेतवृत्तितज्जातीये वा समवायकालिकोभयसम्बन्धेन तज्जातीये वा स्वसमवायिसमवेतत्वेन रूपं तज्जातीयं वा कारणमिति न वाय्वादौ रूपादेः प्रसङ्गः न वा समवायित्वनियमभङ्गः । त्वया तु व्यभिचारस्य पाकस्थले वारणाय वैजात्यमेव कार्यतावच्छेदकं कल्प्यमिति गौरवमिति चेत्, मैवम्, [4]नीलादिप्रतिबन्धकतामपेक्ष्य नीलादिजन्यतावच्छेदकवैजात्यकल्पन एव लाघवात् । अतिरिक्तचित्ररूपस्या

---

१ '°समवायेनोत्पत्तिना समवाये नीलाद्युत्पत्तेरलीकतया' इति पुस्तकान्तरेऽसम्बद्ध इव पाठः । २ 'नीलादाववयवावयवे' इति पुस्तकान्तरे । ३ 'न मया नीलादौ' इति पुस्तकान्तरे । ४ 'नीलाद्यभावप्रतिबन्धकतामपेक्ष्य' इति पुस्तकान्तरे ।

नभ्युपगमेन तत्प्रतिबन्धकताया मयाऽनभ्युपगमात्, चित्राभ्युपगमे चित्रेतररूपे चित्राभावस्य सहभावकारणतयैवातिप्रसङ्गभङ्गात् नीलाद्यभावाभावकारणतापेक्षया तत्रैव लाघवादिति । ननु पाकस्थलेऽवयविनां नाशस्य पाकजरूपनाशे द्रव्यप्रतिबन्धकत्वस्य च कल्पनेऽपि लाघवम् । तथा हि पीताद्यारब्धे नीलाद्यापत्तिवारणाय नीलाद्यभावाभावस्य नीलादेर्वा न कारणत्वम्, व्यक्तिनियमार्थं क्लृप्ततया तद्व्यक्तिसमवेतं प्रति तत्तद्व्यक्तित्वेन कारणत्वैरेव तदापत्तिवारणात् नीलादितत्तद्व्यक्तिसमवेतभिन्ननीलादेरलीकतया विशेषसामग्रीबाधात् एकस्मिन्नवयविद्रव्ये नानारूपानभ्युपगमेन नीलादेः पीतादिमति कुत्राप्यसमवेतत्वात् । तथाच नीलनीतरादिकं प्रत्यनन्तनीलनीलतरादिकारणत्वमपेक्ष्य कारणतालाघवेनानन्तव्यक्तिकल्पनमपि फलमुखतया न दोषः । अतएव कारणतालाघवे सम्भवति चित्रस्थले नानारूपानभ्युपगमादिकं परमाणुद्व्यणुकाद्यतीन्द्रियपदार्थसार्थकल्पनमपि साम्प्रदायिकानामिति ।

अथ न्यायनयेऽपि न नीलादेः कारणत्वं किन्तु पाकजेतररूपे रूपत्वेनैव पाकादवयवावयविनो र्नीलनाशानन्तरं युगपत्पीतोत्पत्त्या व्यभिचारो मा भूदतः पाकजेतरत्वं तत्तज्जात्यवच्छिन्नभेदकूटसमवायोभयसम्बन्धेन रूपविशेषणम् । नच पीतजपीतोत्पत्तिक्षणे नीलाद्यापत्तिः, नीलादि हि द्विविधमेव पाकजं तदितरच्च । तत्र नाद्यं पाकाभावात् । न द्वितीयं समवायिनस्तु [१]तद्व्यक्तित्वेन [२]कारणस्याभावात् । नच नीलनाशे पाकेन पीताद्युत्पत्तिक्षणे नीलापत्तिः, [३]तद्व्यक्तिसमवेतपाकजेतरनीलस्य प्रसिद्धत्वादिति वाच्यम्, तत्रासमवायिनो रूपस्य बाधात्, पाकेन युगपदेवावयवावयविनो रूपनाशात् । नच तथापि चित्रस्थले नानारूपाभ्युपगमपक्षे नीलपीतारब्धे नीलावच्छेदेन पाकात् अवयवावयविनोर्युगपन्नीले नष्टे रक्तोत्पत्तिक्षणेऽवस्थितावयवपीतात्पीतमिव नीलमपि स्यात्, पाकजेतरनीलस्य [४]तत्तद्व्यक्तिसमवेतस्य प्रसिद्धत्वादिति वाच्यम्, वैशेषिकवदत्र स्थलविशेष एवावयविनां नाशाभ्युपगमात्, कारणतालाघवे

१ 'तत्तद्व्यक्तित्वेन' इति पुस्तकान्तरे । २ 'कारणत्वस्याभावात्' इति पुस्तकान्तरे । ३ 'तत्तद्व्यक्ति' इति पुस्तकान्तरे । ४ 'तद्व्यक्ति' इति पुस्तकान्तरे ।

व्यक्तिकल्पनस्य त्वयैव सोढव्यत्वादिति चेत्, न पाकजेतरत्वमपेक्ष्य कालिकसमवायाभ्यां रूपत्वेन कार्यतायां लाघवात् मास्तु चैषाऽपि कार्यता, पाकजे पाकजस्य तदितरत्र तत्तद्व्यक्तेः कारणतयैवोपपत्तेः । नच न्यायेऽपि साम्यित्वति वाच्यम्, तत्रावयवावयविनोः पाकान्नष्टे नीले पीतोत्पत्तिक्षणे नीलप्रसङ्गस्य दुर्वारत्वादिति ।

अत्राहुः, तत्तद्व्यक्तिसमवेतत्वादिना कार्यतैव न सम्भवति, "नीलं तद्व्यक्तिसमवेतमेव कथम्, पीतव्यक्तिसमवेतमेव कथं न" इत्यत्र नियामकालाभात् परस्पराश्रयप्रसङ्गादिति प्राग्विस्तरः । फलमुखगौरवस्यात्मतत्त्वविवेकादौ शिरोमण्यादिभिर्दोषत्वाङ्गीकारादिति संक्षेपः ।

इति पीलुपिठरपाकदर्शनम् ॥

पाकत्वेन स्वसमवायिपृथिवीसमवेतत्वरूपत्वोभयसम्बन्धेन कारणता विशेषणताविशेषवद्रूपनाशत्वेन प्रतियोगितासम्बन्धेन कार्यता । तेजोरूपे नाशो मा भूदतः पृथिवीति । रसादौ रूपनाशो मा भूदतो रूपत्वम् । आश्रयनाशजन्ये रूपनाशे व्यभिचारो मा भूदतो विशेषणताविशेषवत्त्वं रूपनाशविशेषणमुपात्तम् । स च प्रतियोगिसमवायिदेशे इह रूपं नष्टमित्यादि प्रतीतिसाक्षिकः । स्वसमवेतप्रतियोगिकत्वकालिकविशेषणताभ्यां [१]द्रव्यवद्रूपनाशत्वेन कार्यतेति निष्कर्षः ।

प्राञ्चस्तु विशेषणताविशेषेण रूपनाशत्वेन पृथिवीत्वसमवायाभ्यां पाकत्वेन कार्यकारणभावः, प्रतियोगिनोऽपि नाशकत्वाच्च नातीतादेर्नाश इत्याहुः । तन्न, विषयत्वैककालीनत्वादिवद्विशेषणताया उत्पत्त्यनिरूपकत्वेन कार्यतानवच्छेदकत्वात् । इह घटे रूपनाशोजात इत्यादिप्रतीतिस्तु नाश एव घटादिवृत्तित्वमवगाहते, न तूत्पत्तौ । अन्यथा द्रव्यादिनाशस्यापि विशेषणतया[२] कार्यतायामतीवगौरवात् प्रतियोगितायाश्चोत्पत्तिनिरूपकत्वस्य सकलसिद्धत्वात् । न चाश्रयनाशोत्पत्तिक्षणोत्पन्ने[३] रूपनाशे पाककार्यता न लभ्यत इति वाच्यम्,

१ 'द्रव्यवन्नाशत्वेन' इति पुस्तकान्तरे । २ 'विशेषणतायामतीवगौरवात् इति पुस्तकान्तरे । ३ 'आश्रयनाशक्षणोत्पन्ने' इति पुस्तकान्तरे ।

क्षतिविरहात्। क्षणं विलम्ब्याश्रयनाशादेव तत्र रूपनाशात्। न च तथापि स्वाश्रयनाशक्षणे रूपनाशापत्तिः, कार्यकाले कार्यदेशवृत्तितया पाकस्य नाशकत्वाद्विनश्यदवस्थपाकानभ्युपगमाद्वा।

यत्तु ध्वंसभेदेन प्रतियोगितानां भेदादाश्रयनाशजन्यनाशप्रतियोगितानामसम्बन्धत्वादेव न व्यभिचार इति। तत्तुच्छम्, प्रतियोगितात्वं विहायान्यस्यानुगतसम्बन्धतावच्छेदकस्याभावेनोक्तविशेषणस्यावश्यकत्वात्। एवं रसादिनाशेऽपि बोध्यम्।

नव्यास्तु रूपरसगन्धस्पर्शद्रवत्वेषु मूर्तविशेषगुणत्वाख्यं वैजात्यमभ्युपेत्य तज्जातीयनाशत्वेनैकैव कार्यता, पाकस्य कारणतायामपि तज्जातीयत्वमेव सम्बन्धतया निवेश्यम् पाकादन्यतरस्यापि नाशस्थले पञ्चानामपि नाशाभ्युपगमात्। पृथिवीत्वस्य निवेशितत्वादेव च न सांसिद्धिकद्रवत्वस्य नाशः। नच नैमित्तिकद्रवत्वस्य विशेषगुणत्वे भाष्यादिविरोधः, प्रकृते नाममात्रस्योक्तत्वात्। नच चाक्षुषत्वाचोभयप्रतिबन्धकतावच्छेदकरसगन्धगुरुत्ववृत्तिजात्या[१] साङ्कर्यम्, प्रत्यक्षमात्रप्रतिबन्धकतावच्छेदकधर्माधर्मभावनागुरुत्वस्थितिस्थापकपञ्चकवृत्तिजात्या सङ्करस्य प्रसङ्गेन त्वदुक्तजातेर्गुरुत्वेऽभावात्। नचोक्तपञ्चकेनैका जातिरात्मविशेषगुणत्वेन सङ्करादिति वाच्यम्, मनोयोगादेस्तदवच्छिन्ने मानाभावेनाकारणतया सर्वत्रैव मानाभावात्।

अस्तु वा सा जातिः तथापि चाक्षुषत्वाचयोः प्रतिबन्धकत्वद्वयम्, एकं रसगन्धवृत्तिजात्या अपरञ्च स्थितिस्थापकगुरुत्ववृत्तिजात्या वाच्यम्। नच पाके[२] नाश्यतावच्छेदकमेव द्वयमस्तु रसगन्धगुरुत्वस्थितिस्थापकवृत्ति चाक्षुषादिप्रतिबन्धकतावच्छेकजातिव्याप्यं रसगन्धयोरेकम्, अपरञ्च रुपस्पर्शद्रवत्ववृत्ति विनिगमनाविरहादिति वाच्यम्, सजातीयप्रतिबन्धकतावच्छेदकरुपादिचतुष्कवृत्तिजात्या सङ्करेण चाक्षुषादिप्रतिबन्धकतावच्छेदकजातेरुक्तचतुष्कवृत्तेरसम्भवात्। रूपादिचतुष्के चैकजात्यनङ्गीकारे पाकनाशकत्वसजातीयप्रति-

---

१ 'वृत्त्या जात्या' इति पुस्तकान्तरे। २ 'पाकनाश्यतावच्छेदकमेव' इति पुस्तकान्तरे।

बन्धकत्वयोरपि[1] नानात्वापत्तिः[2] । सजातीयप्रतिबन्धकतावच्छेदकजातेर्गुरुत्वादावप्यङ्गीकारे परमाणौ पाकाद्रूपाद्यनुत्पादप्रसङ्गादिति ।

केचित्तु मूर्त्तविशेषगुणस्य[3] द्वैविध्ये अनियतारम्भनये रूपादौ घ्राणादीनां प्रतिबन्धकत्वमपि द्विविधं स्यादिति गौरवमित्याहुरिति[4] ।

ननु पाकनाशकत्वसजातीयप्रतिबन्धकत्वयोरेकैकत्वे व्यक्तिकल्पनालाघवस्योपजीव्यस्य विरोधः । रूपमात्रपरावृत्तिस्थले रसादिजनकपाकानां रसादीनां च अतिरिक्तव्यक्तीनां कल्पनात्, मया सर्वपरावृत्तिस्थले नाशकपाकानामेवातिरिक्तानां कल्पनात् एकस्य पाकस्य चतुर्षु कारणत्वासम्भवेन जनकपाकव्यक्तीनामुभयकल्प्यत्वात् इति चेत्, मैवम्, अप्रामाणिकरूपादिमज्ज्ञानाकल्पनलाघवस्योपजीव्यतया तद्विरोधाभावात् । उक्तपाकरसादिव्यक्तिकल्पनस्य चैकनाशकत्वकल्पनोत्तरकालिकत्वेन फलमुखत्वात् ।

नूतनास्तु अप्रामाणिकव्यक्तिसन्तानाकल्पनलाघवेनैकं प्रतिबन्धकत्वमिव तावदुक्तपाकरसादिव्यक्तिसहस्राकल्पनलाघवेन नाशकत्वं [5]प्रतिबन्धकत्वञ्च रूपादौ प्रत्येकमेव कल्प्यते । व्यक्तिकल्पनलाघवस्य कल्पकस्य सत्त्वादिति प्राहुः ।

ननु रूपादिनाशकतावच्छेदकं पाकवैजात्यं नीलादिजनकतावच्छेदकस्य पाकवैजात्यस्य व्याप्यं [6]समनियतं व्यापकम्वा ? आद्ययोर्व्यभिचारः नीलाद्यजनकादपि पाकाद्रूपनाशात्, अन्त्ये यत्रापरमाणुपाकाद्घटादौ पूर्वरूपनाशः अग्नौ क्रियानाशः तदनु घटादौ रूपान्तरम् अग्नौ क्रियान्तरं तेजसोनित्यसञ्चारित्वात्, तदनु तद्रूपनाशोघटादावग्नेर्विभागश्च ततोऽग्निसंयोगनाशः इदानीं न रूपान्तरमुत्पद्यते असमवायिनः कार्यसहभावेन कारणत्वात् तत्र घटादेर्नीरूपत्वस्य सर्वत्र मध्यमरूपादीनां क्षणिकत्वस्य प्रसंग इति चेत्, सत्यम्, मिथो विरोधानभ्युपगमात् । नाशकपाकनाशपूर्वक्षण एव जनकपाकोत्पादाभ्युपगमात् निविडयोरेव मूर्त्तयोः संयोगेन विरोधादिति ।

---

१ '°प्रतिबन्धकत्वयोर्द्वयोरपि' इति पुस्तकान्तरे । २ 'नानात्वापत्ते' इति पुस्तकान्तरे । ३ '°गुणत्वस्य' इति पुस्तकान्तरे । ४ '°रिति वर्णयन्ति' इति पुस्तकान्तरे । ५ 'प्रतिबन्धकञ्च' इति पुस्तकान्तरे । ६ 'व्याप्यमभिन्नम्' इति पुस्तकान्तरे ।

मध्यास्तु तस्य व्यापकमेव तत्, असमवायिनोऽपि पाकस्य न सहभावेन कारणत्वमिति न नीरूपत्वप्रसङ्गः । मध्यमरूपादीनां क्षणिकत्वमिष्टमेव । पाकस्य नाशकतायां पूर्वत्वमपि वा अवच्छेदकसम्बन्धः, मध्यमरूपाद्युत्पत्तिक्षण एव वा नाशः पाकस्य स्वीकार्य इत्याहुः ।

नूतनास्तु सामान्यतः प्रतियोगितया नाशत्वेन स्वप्रतियोग्याधारतया नाशत्वेन कार्यकारणभावः । आधारता कालिकीति न कस्यापि क्षणिकत्वम्, कस्यचिद् भेदो वा नाश्ये निवेश्य इति न शास्त्रविरोधः । जातिनाशवारणार्थमाश्रयनाशसम्बन्धविधया स्वप्रतिजन्यत्वस्य कालिकसम्बन्धस्य वा निवेशः । असमवायिनाशनाश्ये द्रव्यपरत्वादौ क्षणिकत्ववारणाय तत्र तत्रासमवायिनः सहभावेन कारणत्वं स्मृतेरुपधायकतया संस्कारनाशकत्वं रूपादौ नाशकजनकपाकयोर्भेदं पूर्वत्वस्य नाशकपाकसम्बन्धकत्वं चापेक्ष्याऽत्यन्तलाघवादिति प्राहुः ।

इति पाकनाशकत्वदर्शनम् ॥

चरमज्ञानान्येषां योग्यात्मविशेषगुणानां समानाधिकरणं स्वोत्तरसजातीयमेव नाशकम् । चरमज्ञानस्य तु निमित्तविषयीभूतचरमदुःखनाश एव नाशकः । तथाहि योग्यात्मविशेषगुणवृत्तिप्रतियोगितया नाशत्वेन कार्यता तादृशगुणत्वपूर्वत्वसामानाधिकरण्ये तादृशगुणत्वेन कारणता । एवं चरमज्ञानमप्युक्तं द्वित्वाद्युपधायकापेक्षाबुद्धेरुत्तरद्वितीयक्षणे च तदात्मनि तदनुव्यवसायादितदात्मीयानेकसंख्यासामग्र्यादेस्तदात्मीयविशेषगुणप्रतिबन्धकत्वात् । तत्तृतीयक्षणोत्पन्नेन च द्वित्वत्वनिर्विकल्पकादिना तच्चतुर्थक्षणे नाश इत्यन्यत्र विस्तरः । अतएव सामानाधिकरण्यनिवेशः । अन्यथा व्याधिकरणस्य ज्ञानादेरपेक्षाबुद्धावपि पूर्वत्वसम्बन्धेन सत्त्वात् तृतीयक्षणे नाशापत्तेः । शब्दस्य त्वनन्त्यस्य स्वजन्यः शब्दोऽन्यस्य तूपान्त्यः शब्दो नाशकः । तथाहि प्रतियोगितयाऽनन्त्यशब्दनाशत्वेन कार्यता जनकतया शब्दत्वेन कारणता । अन्त्यशब्दवृत्तिप्रतियोगितया नाशत्वेन कार्यतायाञ्च अन्त्यशब्दत्वशून्यत्वाभ्यां[1] शब्दत्वेन कारणता अन्त्यशब्दस्य क्षणिकत्वाभ्युपगमात् । अन्त्यत्वं तु शब्दाजनकत्वम् ।

---

१ 'जन्यत्वाभ्याम्' इति पुस्तकान्तरे ।

यद्वा अन्त्यशब्दनाशे तादात्म्येन शब्दएव नाशकः लाघवात् अन्त्यशब्दस्यापि क्षणद्वयस्थायित्वे तु उपान्त्यशब्दनाश एव नाशकः शब्दनाशजन्यशब्दनाशत्वेन प्रतियोगितया कार्यता स्वप्रतियोगिजन्यशब्दत्वेन शब्दनाशत्वेन कारणता अनाद्यसकलशब्दसाधारण्येऽपि क्षत्यभावात् । अन्त्यशब्दत्वस्य शब्दाजनकशब्दत्वस्य गुरुत्वात्, प्रथमकारणतयैवाद्यादिशब्दनाशनिर्वाहात् । अनन्त्यशब्दत्वं शब्दजनकशब्दत्वमपेक्ष्य[1] शब्दाजन्यशब्दत्वरूपस्याद्यत्व [2] गुरुत्वाच्च न तत्र निवेशः । जन्यत्वं जनकत्वं चोपधानरूपं निवेश्यम् । नच तथाप्यादिशब्दनाशस्य स्वप्रतियोग्युपधानेन तृतीयशब्दे[3] सत्त्वात् क्षणिकत्वं स्यात् । उत्पत्तिसम्बन्धेन जनकताभ्युपगमेन तृतीयादौ प्रथमादेरनुपधायकत्वादिति प्राञ्चः ।

मध्यास्तु ज्ञानान्ययोग्यविभुविशेषगुणानां सहवर्त्तिनाशो नाशकः । तथाहि ज्ञानान्यत्वयोग्यविभुविशेषगुणत्वस्वप्रतियोग्याधारत्वत्रितयसम्बन्धेन नाशत्वेन कारणता, अन्त्यशब्दावृत्तिप्रतियोगितया नाशत्वेन कार्यता । अन्त्यशब्दस्य क्षणिकत्वे तु प्रतियोगितयैव कार्यता । योग्यविभुविशेषगुणत्वं च मूर्तसमवेतासमवेतप्रत्यक्षधर्मवत्त्वं जातिविशेषो वेति जीवनयोनियत्नसंग्रहः । स्वप्रतियोगिनः तदानीमसत्त्वेऽपि तदाधारतासत्त्वान्न दोषः । कालिकस्वप्रतियोगिसामानाधिकरण्यनिरूपकत्वं तद्घटकनिष्ठं सम्बन्धः इत्यपि पक्षः । अन्त्यशब्दस्य तूपान्त्यशब्दो जन्यतया स्वयम्वा तादात्म्येन नाशकः । ज्ञानस्य तु स्वसमानाधिकरणस्वोत्तरोत्पन्नविभुविशेषगुणो नाशकः । तथा हि प्रतियोगितया ज्ञाननाशत्वेन कार्यता ज्ञानत्वसामानाधिकरण्यस्वप्रागभावाधारत्वरूपपूर्वत्वैतत्त्रितयसम्बन्धेन विभुविशेषगुणत्वेन कारणता । विभुविशेषगुणत्वञ्च मूर्तसमवेतासमवेतधर्मसमवायित्वम्, परममहत्त्वसाधारण्येऽपि क्षतिविरहात् जातिविशेषो वा संस्कारत्वजातौ मानाभावेन भावनासाधारणः स्वोकार्यः । प्रागभावानभ्युपगमे स्वध्वंसप्रतियोग्याधारत्वं तृतीयः सम्बन्धः प्रवेश्यः ।

अथैवमात्ममात्रविषयकनिर्विकल्पात्मकचरमतत्त्वज्ञाननाशे व्यभिचारः ।

---

१ 'शब्दमपेक्ष्य' इति पुस्तकान्तरे । २ 'शब्दाजन्यशब्दरूपस्याद्यत्वस्य' इति पुस्तकान्तरे । ३ 'द्वितीयशब्दे' इति पुस्तकान्तरे ।

तस्य संस्काराद्यजनकतया स्वजन्यादृष्टनाशादेव नाशादितिचेत्, न स्वजन्यचरमदुःखस्य तन्नाशसत्त्वाभ्युपगमात् । नच चरमज्ञानपरत्वद्वित्वादीनां निमित्तनाशनाश्यत्वं साधर्म्यमिति भाष्यविरोधः । तत्र चरमज्ञानपदस्य [१]चरमदुःखसाक्षात्कारतया वर्द्धमानादिभिर्व्याख्यानात्चरमदुःखविषयकात्तृत्तिप्रतियोगितायाः कार्यसम्बन्धत्वाच्च न तत्साक्षात्कारनाशे व्यभिचारः । तत्साक्षात्कारस्य सहवर्त्तिनाश एव नाशकः । ज्ञानान्यत्वस्थाने चरमदुःखाविषयकज्ञानान्यत्वस्य सम्बन्धस्य निवेशात् । नच तादृशतत्त्वज्ञाने आत्मत्वादिभानवारणायात्मान्यभाने तत्त्वज्ञानाभावस्य कार्यसहभावेन हेतुत्वात् कथं दुःख साक्षात्कार इति वाच्यम्, तत्त्वज्ञानसामग्र्यभावस्यैव हेतुत्वाभ्युपगमात् ।

अथैवं श्रुतिविरोधः चरमदुःखेनैव तत्त्वज्ञानस्य नाशान्मोक्षजनकत्वस्य बाधादिति चेत्, न चरमदुःखत्वस्य व्यापारत्वाभ्युपगमात् । अथ ज्ञाननाशकत्वं विहाय विभुविशेषगुणनाशत्वेनैव कार्यताऽस्तु तथैव कारणसम्बन्धेऽपि निवेशस्य सम्भवादिति चेत्, न चरमान्त्यशब्दोत्तरं महाप्रलये देशान्तरेऽपि शब्दस्यानुत्पत्तेः, तन्नाशे व्यभिचारापत्तेः, कार्यसम्बन्धे विशेषणदाने गौरवापत्तेरिति ।

अथ शब्दस्य सहवर्त्तिनाशः शब्दान्ययोग्यविभुविशेषगुणस्य तादृशस्योत्तर विभुविशेषगुणो नाशकोऽस्तु विनिगमनाविरहाच्चरमदुःखस्यापि स्वसाक्षात्कारेण नाशस्य सर्ववादिसिद्धत्वादिति चेत्, न चरमज्ञानस्य नाशकान्तरकल्पनापत्तेः । चरमयोरन्त्यशब्दज्ञानयोरेव नाशार्थं सहवर्त्तिनाशस्य नाशकत्वाभ्युपगमात् । यदि चाविदितमपि दुःखमभ्युपेयते । चरमदुःखस्य साक्षात्कारे मानाभावेन तदविषयकत्वं ज्ञानेऽपहाय प्रतियोगितायामेव चरमदुःखात्तृत्तित्वं देयम्, चरमदुःखस्य च [२]श्रुतिबोधितं तत्त्वज्ञानमेव नाशकम्, एवं च तस्य क्षणिकत्वेऽपि न क्षतिरिति मतम्, तदाऽस्तु विनिगमनाविरहात् नाशकताचतुष्टयम् । अतएव ज्ञानान्ययोग्यविभुविशेषगुणत्वं जातिर्नोक्ता शब्दान्ययोग्यविभुविशेषगुणत्वाख्यया जात्या सङ्करप्रसङ्गात् , किन्त्वन्यतमत्वमुभयत्र सम्बन्धगतिः ।

---

१ 'सुखदुःखसाक्षात्कारतया' इति पुस्तकान्तरे । २ 'श्रुतिविरोधि' इति पुस्तकान्तरे ।

वस्तुतोऽत्र मते शब्दान्ययोग्यविभुविशेषगुणस्थाने योग्यात्मविशेषगुणत्वजातेर्निवेशो [१]नाश्ये नाशके चाद्युक्तकल्प एव श्रेयान् । अन्यत्त्वानिवेशलाघवादिति । महाप्रलयानङ्गीकारे तु योग्यविभुविशेषगुणसामान्यस्य स्वोत्तरतादृशगुणो नाशकः कायसम्बन्धे प्रतियोगितायां चरमज्ञानावृत्तित्वं देयमिति न तन्नाशे व्यभिचारः । चरमज्ञानस्य तु विषयनिमितीभूतस्य दुःखस्यैव नाशो नाशकः । तेन न साधर्म्यभाष्यविरोधः । यदि च तद्विरोधे सहिष्णुता तदा चरमदुःखसाक्षात्कारे मानाभावेन चरमदुःखावृत्तित्वमेव प्रतियोगितायां देयमिति ।

केचित्तु महाप्रलयाभ्युपगमे योग्यात्मविशेषगुणस्य स्वोत्तरतादृशात्मविशेषगुण एव नाशकः । शब्दस्य तु तादात्म्येन स्वयमेव । क्षणिकत्वं च सर्वशब्दानामिष्यत एव । नचैवं कत्वविशिष्टश्रावणानुपपत्तिः, आद्यककारनिर्विकल्पकक्षणे द्वितीयककाराद्युत्पत्तेः । नच समानावच्छेदकतया कत्वादिना प्रतिवध्यप्रतिबन्धकभावान्नैवमिति वाच्यम्, फलबलकल्प्यनिमित्तवायुसंयोगबाधने वाऽविरलककारादिकारणे तथा प्रतिबन्धकत्वस्यासिद्धेः । योग्यात्मविशेषगुणानां ज्ञानेन सह यौगपद्यस्यात्यन्तबाधितत्वात् सुखत्वादिविशिष्टलौकिकसाक्षात्कारोपपत्त्यर्थमेव क्षणिकत्वानभ्युपगमादित्याहुः । तत्तुच्छम्, अनन्तककारादिकल्पनमपेक्ष्य सहवर्त्तिनाशनाशकतायामेव लाघवादिति ।

नव्यास्तु योग्यविभुविशेषगुणत्वं नाम बुद्ध्यादिषट्कशब्दवृत्तिजातिविशेषः । तज्जातीयस्य सर्वस्य सहवर्त्तिनाश एव नाशकः । तज्जातीयवृत्तिप्रतियोगितया नाशत्वेन तज्जातीयत्वपूर्वत्वसम्बन्धाभ्यां नाशत्वेन कार्यकारणभावः । पूर्वत्वं तु स्वप्रतियोग्याधारत्वं कालिकमिति न तज्जातीयस्य कस्यापि क्षणिकत्वम्, पूर्वत्वेन सत्त्वेन वा नाशकता । यद्वा तादात्म्येन तज्जातीयमेव कारणम्, सामान्यतो नाशं प्रति पूर्वत्वसम्बन्धेन नाशत्वेन कारणत्वाभ्युपगमादेव च न कस्यापि क्षणिकता द्रव्यादिनाशे च विशेषतोऽसमवायिनाशादेः कारणतयैवातिप्रसङ्गभङ्गादपेक्षाबुद्धेरपि न क्षणत्रयस्थायित्वे क्षतिरिति संक्षेपः ।

इति विभुविशेषगुणविनाशदर्शनम् ।

---

१ 'नाशेत्याद्युक्तकल्प एव श्रेयान्' इति पुस्तकान्तरे ।

अपेक्षाबुद्धेस्त्रिक्षणावस्थायित्वञ्च स्वजन्यद्वित्वादिव्यञ्जकत्वानुरोधात् । तथा हि प्रथमं तावदयमेकोऽयमेक इति नानैकत्वविषयापेक्षाबुद्धिः, तदनु घटादिद्वये द्वित्वादि, तदनु द्वित्वत्वादिनिर्विकल्पकं तदनु द्वित्वत्वादिविशिष्टबुद्धिः[१], ततो द्वे द्रव्ये इत्यादिविशिष्टवैशिष्ट्यप्रत्यक्षमिति क्रमः । तत्र तस्या द्विक्षणावस्थायित्वे विशिष्टवैशिष्ट्यप्रत्यक्षानुपपत्तिः । निर्विकल्पकक्षणेऽपेक्षाया नाशेन द्वित्वादेर्निमित्तनाशनाश्यतया सविकल्पकक्षणे नाशात् । अतो द्वित्वत्वादेर्निर्विकल्पकं तन्नाशकं कल्प्यत इति क्षणत्रयावस्थायित्वं सिद्ध्यति । यस्यापि पुंसो द्वित्वादेरुत्पत्तिक्षणे द्वित्वत्वादेर्नोपस्थितिः तस्याप्युक्तक्रमेण द्वे द्रव्ये इत्यादेः प्रत्यक्षस्यानुभविकत्वात् ।

अथापेक्षाद्वयं द्वित्वादिद्वयं चास्तु । तथा हि प्रथमापेक्षाबुद्ध्या प्रथमद्वित्वं द्वितीयापेक्षा च ततो निर्विकल्पकं द्वितीयं द्वित्वं प्रथमापेक्षाबुद्धेर्द्वितीयद्वित्वानुपधायकत्वात् नाशश्च ततः सविकल्पकं प्रथमद्वित्वादेर्नाशश्च न तु द्वितीयस्य, उत्पत्तिसम्बन्धेनापेक्षायाः कारणतया प्रथमापेक्षाया द्वितीयद्वित्वोपधायकत्वाभावात्, सोपधायकनाशस्यैव द्वित्वादेर्नाशकत्वात् । ततश्च द्वितीयद्वित्वादिगोचरं द्वे द्रव्ये, इत्यादिप्रत्यक्षमुपपद्यतामिति चेत्, न धारावाहिकापेक्षास्थले द्वित्वादिव्यक्तिसन्तानाकल्पनलाघवेन पर्याप्त्या द्वित्वादौ द्वित्वादेः प्रतिबन्धकत्वात् ।

नन्वेवमनुमितिसुखादेरपि त्रिक्षणावस्थायित्वमस्तु निर्विकल्पकक्रमोत्पन्नस्य अनुमिनोमि सुखीत्याकारकप्रत्यक्षस्य अन्यथाऽनुपपत्तेः । यदि चानुमित्याद्यंशे अलौकिकत्वमस्याभ्युपगम्यते तदा प्रकृते द्वित्वाद्यंशे तथात्वमस्तु । न च द्वे द्रव्ये इत्याद्यनन्तरमिदानीं द्वित्वं पश्यामीत्यादेः प्रत्यक्षस्यानुपपत्तिः लाघवात् स्थूलकालोपाधिद्वित्वत्वसविकल्पकविषयतयोपपत्तेः । अन्यथा सुखीत्यनन्तरमिदानीं सुखं साक्षात्करोमीत्यस्याप्यनुपपत्तेः । एवमिदानीमनयोर्द्वित्वादिकं पश्यामीत्याद्यपि तुल्यमिति चेत्, मैवम्. सम्बद्धं वर्त्तमानञ्च गृह्यते चक्षुरादिना इत्यस्य शास्त्रस्यापेक्ष्याव्यङ्ग्यगुणपरतया सर्वसिद्धस्यान्यथानुपपत्तेः । तदर्थो हि

---

१ '०विशिष्टप्रत्यक्षम्' इति पुस्तकान्तरे ।

स्वप्रत्यक्षेऽपेक्ष्याव्यङ्ग्यगुणानां तन्निष्ठसन्निकर्षस्य वा सहभावेन कारणत्वम्। इत्यञ्च द्वित्वादेस्तृतीयक्षणे नाशे सविकल्पकमपि स्यात्। अपेक्षायास्त्रिक्षणावस्थायित्वे तु तत्र क्षणे तस्या नाशेनाग्रिमक्षणे द्वित्वादेर्नाश इति नानुपपत्तिः शास्त्रस्य, लोपयितुमशक्यत्वात्[१]। अथोक्तशास्त्रस्य प्रामाण्यार्थमभावत्वविषयत्वादेरिव द्वित्वत्वादेः प्रकारतया भानमास्थीयतामिति चेत्, न कदाचित् द्वित्वं कदाचिज्जातिमदित्यादि प्रतीतिनियमार्थं विशेषणज्ञानकारणतायाः सार्वत्रिकत्वात्।

अथ तथापि द्वे द्रव्ये इत्यादिप्रत्यक्षस्य द्वित्वाद्यंशेऽवश्यमलौकिकत्वं मन्तव्यं तस्मिन् क्षणे द्वित्वादेर्नाशात्। तथा च सविकल्पकस्यापि द्वित्वत्वादिजात्यंशे लौकिकस्य द्वित्वाद्यंशेऽलौकिकत्वमस्तु। न च निर्विकल्पकस्यानुपनायकत्वान्नैतत् सम्भवतीति वाच्यम्, द्वित्वत्वाद्यंशे निर्विकल्पकस्यापेक्षाद्युपस्थितसंख्यात्वगुणत्वादेर्द्वित्वाद्युपरि प्रकारतया भानेन गुणांशे सविकल्पकतया ततो गुणांशालौकिकस्य विशेष्ये विशेषणमिति न्यायेन द्वित्वसंख्या गुणवती द्रव्ये [२]इत्यादि विशिष्टप्रत्यक्षस्य सम्भवात्। न च द्वित्वादिनाशक्षणे द्वित्वत्वादिलौकिकमपि असम्भवि द्वित्वादिघटितसन्निकर्षस्य सहभावाभावादिति वाच्यम्, उक्तशास्त्रवाक्येन तादृशगुणप्रत्यक्षमात्रे विषयस्य सन्निकर्षस्य वा सहभावापेक्षणात् अन्यत्रापेक्षणेऽतिगौरवमिति चेत्, मैवम्, द्वे द्रव्ये इत्यादिप्रत्यक्षानन्तरं द्वित्वं पश्यामि इत्यनुव्यवसायानुपपत्तेः निर्विकल्पकमात्रस्य द्वित्वादिलौकिकत्वेन पूर्वं द्वित्वादिलौकिकप्रत्यक्षस्यासत्त्वात्[३]।

अथ विनश्यदवस्थे द्रव्ये जातस्य द्वित्वादेर्द्वित्वत्वादिविशिष्टं प्रत्यक्षं न स्यात्। आश्रयनाशेन द्वित्वपरत्वादिनाशं वदता भाष्यकृता तत्र तत्र समवायिनोऽसहभूतस्यापि [४]कारणत्वाभ्युपगमादिति चेत्, न इष्टत्वात्। लाघवात् सर्वत्रैव समवायिनः सहभावेन हेतुत्वाच्चेति। ननु तथापि स्वोत्तरतादृशगुणतया

---

१ 'लोपयितुमयोग्यत्वात्' इति पुस्तकान्तरे। २ 'इत्याद्याकारकद्वित्वत्वादिविशिष्टप्रत्यक्षस्य ततो द्वे द्रव्ये इत्यादिविशिष्टवैशिष्ट्यप्रत्यक्षस्य सम्भवात्' इत्यधिकः पाठः पुस्तकान्तरे। ३ '°प्रत्यक्षस्येत्यसत्त्वात्' इति पाठान्तरम्। ४ 'कारणत्वाभ्यनुज्ञानादिति चेत्,' इति पुस्तकान्तरे।

स्वनाशकस्य स्वजन्यसंस्कारानुव्यवसायादेर्द्वितीयक्षणोत्पन्नस्य सत्त्वात् तृतीयक्षणेऽपेक्षाबुद्धेर्नाशोदुर्निवार इति चेत्, मैवम्, तदात्मीयानेकसंख्यासामग्रीत्वे तदात्मीयविशेषगुणप्रतिबन्धकत्वात् अपेक्षाबुद्ध्या द्वितीयक्षणे संस्कारादेरजननात्। तदात्मीयत्वञ्च तदात्मसमवेतलौकिकप्रत्यक्षविषयत्वम्। तेन द्वित्वाद्यनुपधायिकाया इवायोग्यतदुपधायिकाया अपि तस्या न त्रिक्षणावस्थायित्वम् उक्तानुपपत्तेरभावात्। अनेकसंख्यात्वञ्च एकत्वान्यसंख्यावृत्तिर्जातिः, सैव निमित्तनाशनाश्यतायामवच्छेदिका, ईश्वरापेक्षाबुद्धिजन्यद्वित्वादेरपि निमित्तकालोपाधिविशेषणनाशाभ्युपगमात्[1]। एतत्प्रतिबन्धकत्वादेव च उपेक्षाया इवापेक्षाया अपि संस्काराजनकत्वमामनन्ति। उत्पत्तिसम्बन्धेन कारणतया तृतीयक्षणे संस्काराजननात् तदपि योग्यद्वित्वाद्युपधायिकायाएव बोध्यम्, तस्या एव तत्प्रतिबन्धकत्वात्। नचाद्यद्वित्वाद्युत्पत्तिक्षणजातायास्तद्व्यधिकरणद्वित्वादिजनकापेक्षाबुद्धेरनन्तरमाद्यद्वित्वादेः प्रत्यक्षं न स्यादिति वाच्यम्, इष्टत्वात्। अन्यथाद्यद्वित्वादिप्रत्यक्षेण द्वितीयापेक्षाबुद्धेर्नाशे त्रिक्षणस्थायित्वानुपपत्तेः। नच यावदाश्रयप्रत्यक्षानन्तर जानुमित्यात्मकापेक्षाबुद्धिजद्वित्वादिप्रत्यक्षं न स्यात्। यावदाश्रयप्रत्यक्षस्य द्वित्वाद्युत्पत्तिक्षणे नाशात्। पुनरन्यस्यानेकसंख्यासामग्रीप्रतिबन्धकत्वादनुत्पत्तेरिति-वाच्यम् इष्टत्वात्। तत्पुरुषीययावदाश्रयप्रत्यक्षात्मकापेक्षाबुद्धिजद्वित्वादेरेव [2]तत्पुरुषीयप्रत्यक्षत्वाभ्युपगमात्।

वस्तुतस्तु लौकिकापेक्षाबुद्धेरुत्पत्तिसम्बन्धेन प्रतिबन्धकत्वं कल्प्यम्। उत्पत्तिसम्बन्धस्तु स्वप्रागभावाधारक्षणत्यवच्छिन्नसमवायः इति नानुपपत्तिरिति प्राञ्चः।

मध्यास्तु योग्यविभुविशेषगुणनाशेऽनेकसंख्यानिर्विकल्पकसामग्रीप्रतिबन्धिका कल्प्या। नतु तादृशगुणेऽनेकसंख्यासामग्री। इत्थंचापेक्षायाः संस्काराजनकत्वप्रवादो हेयः। सामग्रीत्वं च प्रत्यक्षादिसामग्रीप्रतिबन्धकताप्रकरणेनिरुक्तम्। तन्निर्विकल्पकत्वं च प्रकारितादिभिन्नतद्विषयिताशालिज्ञानत्वम्। वस्तुतोऽनेक

---

१ '°विशेषणनाशेन, नाशाभ्युपगमात् इति पुस्तकान्तरे।

२ 'तत्पुरुषीयप्रत्यक्षीयत्वाभ्युपगमात्' इति पुस्तकान्तरे।

संख्यात्वव्याप्यजातिनिर्विकल्पकसामग्रीत्वेन प्रतिबन्धकता वाच्या । एतेन द्वित्वादिनिर्विकल्पके द्वित्वाद्युपरि प्रागुपस्थितसंख्यात्वगुणत्वादेः प्रकारतयाभानेऽपि न क्षतिः । तत्रापि द्वित्वत्वाद्यंशे निर्विकल्पकत्वसत्त्वात् । इत्थञ्च यत्र द्वित्वं त्रित्वजनिकापेक्षाबुद्धिश्चेत्येकः कालः ततो द्वित्वत्वनिर्विकल्पकं त्रित्वं चेत्येकः कालः ततो द्वित्वत्वविशिष्टबुद्धिस्त्रित्वत्वनिर्विकल्पकं चेत्येकः कालः, तत्र द्वित्वजनकापेक्षाबुद्धेरिदानीं नाशस्त्रित्वत्वनिर्विकल्पकसामग्र्याः प्रतिबन्धकत्वादिति चतुःक्षणस्थायित्वम् । एवं त्रित्वोत्पत्तिक्षणे चतुष्ट्वजनकापेक्षाबुद्ध्युत्पत्तौ पञ्चक्षणस्थायित्वम् । एवमधिकसमयस्थायित्वमपि स्वीकार्यमित्याहुः ।

नवीनास्तु अपेक्षाबुद्धिरपि द्विक्षणस्थायिन्येव । अतिरिक्तप्रतिबन्धकताकल्पने गौरवात् । द्वित्वादेरपि पूर्ववर्त्तितयैव स्वप्रत्यक्षे हेतुतया न विशिष्टप्रत्यक्षानुपपत्तिः ।

नच निर्विकल्पकक्षणोत्पन्नेनापेक्षाबुद्धिनाशेनाग्रिमक्षणे लौकिकविशिष्टप्रत्यक्षानुपपत्तिरिति वाच्यम्, निर्विकल्पकोत्तरक्षण एव विशेष्ये विशेषणमिति न्यायेन लौकिकस्य तस्योपपत्तेः । तदग्रिमक्षणे चालौकिकप्रत्यक्षस्यानुमिनोमीत्यस्येव स्वीकारात् । अन्यथा सामान्यसामग्र्या तृतीयक्षणे नाशवारणाय तन्नाश्यतावच्छेदकेऽपेक्षान्यत्वनिवेशस्यापेक्षायां नाशकतान्तकल्पनस्य चापत्तिरिति सम्बद्धम्, वर्त्तमानञ्चेत्यत्र वर्तमानपदस्याव्यवहितपूर्ववर्त्तितामात्रपरत्वात् । अथान्यपुरुषीयापेक्षाबुद्धिजद्वित्वादेरन्यपुरुषाप्रत्यक्षत्वार्थं तत्पुरुषीयानेकसंख्याप्रत्यक्षे तत्पुरुषीयापेक्षाबुद्धेरुपहितजन्यताविशेषसम्बन्धेन कारणतया तस्यानिर्विकल्पकक्षणे विनाशेऽग्रिमक्षणे विशिष्टद्वित्वादिप्रत्यक्षानुपपत्तिः तादात्म्येन तत्पुरुषीयापेक्षाबुद्धिजन्याऽनेकसंख्यात्वेन कारणतायां गौरवादिति चेत्, न अपेक्षाबुद्धित्वस्यैकस्यानुगतस्य दुर्वचतया तत्पुरुषीयापेक्षाबुद्धिजद्वित्वादिषु प्रत्येकं क्लृप्तजातिभिरेव कारणतानां पर्यवसानात् । तद्बुद्धिव्यङ्ग्यत्वप्रवादस्य तत्प्रयोज्यलौकिकप्रत्यक्षविषयत्वार्थकत्वात् तद्बुद्धिविषयत्वं वा तदर्थः । द्वित्वादिप्रत्यक्षमात्रे सामग्रीबलेन नानैकत्वभानस्यावश्यकत्त्वात्, तदुक्तं प्रत्यक्षालोके पक्षधरमिश्रैस्तदेव द्वित्वादेरपेक्षाबुद्धिव्यङ्ग्यत्वं यदपेक्षाबुद्धिविषयत्वमिति प्राहुः ।

इति त्रिक्षणस्थायित्वदर्शनम् ।

ननु द्वित्वादिकं प्रत्यपेक्षाबुद्धेः कारणत्वे मानाभावः एकत्वद्वयादिरूपासमवायिकारणादितएव [१]द्वित्वाद्युपपत्तेः । नच घटद्वयादावविरलद्वित्वादिसन्तानप्रसङ्गः पर्याप्त्या सजातीयस्य प्रतिबन्धकत्वात् । द्वित्वादिनाशस्य तु सहवर्तिनाशादितोऽप्युपपत्तेरितिचेत्, मैवम्, एवमपि द्वित्वादिनाशाग्रिमक्षणेषु नियमतो द्वित्वादेरुत्पत्तावपेक्षाबुद्धिं विना सन्तानकल्पनमपेक्ष्य लाघवेन तस्याः कारणत्वसिद्धेः एकपुरुषीयबुद्धिजद्वित्वादिमति अपरपुरुषीयबुद्धिजद्वित्वाद्युत्पत्तिश्चावश्यकी । अन्यथाद्यद्वित्वादिनाशेऽपरपुरुषस्य द्वित्वादिप्रत्यक्षानुपपत्तेः । अतएव प्रतिबन्धकतापि तत्पुरुषीयबुद्धिजद्वित्वत्वादिनैव सजातीयस्य कल्प्या अतएवायोग्यद्रव्यद्वयावृत्तिद्वित्वादावपि तस्याः कारणता, अन्यथा तत्रापि तथैव सन्तानकल्पनप्रसङ्गात्, तत्तत्पुरुषीयबुद्धिजन्ये द्वित्वादौ सजातीयप्रतिबन्धकताया दुर्वचत्वात् । जन्यबुद्ध्यजन्यानेकसंख्यासामान्येऽनेकसंख्यासामान्यस्य प्रतिबन्धकत्व कल्पनेऽपि तत्तन्नाशोत्तरसन्तानप्रसङ्गस्यान्यथा दुर्वारत्वात् ।

अथापेक्षाबुद्धेरुत्पत्तिसम्बन्धेन कारणत्वादेव सन्तानप्रसङ्गभङ्गे सजातीयस्य न प्रतिबन्धकतेतिचेत्, न धारावाहिकापेक्षाबुद्धिसम्भवात् । ननु सर्गादौ द्वित्वाद्युत्पत्त्यर्थमीश्वरापेक्षाबुद्धेरपि तत्कारणत्वस्याभ्युपगमात् ततः सन्तानभङ्गप्रसङ्गः कथम् । इत्थञ्च सर्गाद्यकालस्य तत्सहकारिताभ्युपगमात् । अन्यदेश्वरबुद्ध्या द्वित्वाद्यजननस्येष्टत्वात् । सर्गाद्यत्वन्तु जन्यज्ञानानाधारजन्यद्रव्याधारत्वं जन्येच्छानाधारत्वादिभिरपि विनिगमनाविरहात् तद्घटितमुपादेयम् आद्यजन्यज्ञानानन्तरं द्वित्वादिकं सर्वज्ञयोगिबुद्ध्यैव जननीयम् ।

अथेश्वरबुद्धिजन्यनित्यवृत्तिद्वित्वादेराश्रयनिमित्तयोर्नाशाभावे नाशः कथम् इत्थमनायत्या सहवर्त्तिनाशादेवेति संक्षेपः ।

कारणता च तदेतद्व्यक्तित्वावच्छिन्नतदुभयविशेष्यताकैकत्वप्रकारताकबुद्धित्वादिना । कार्यता तु तदुभयसमवेतद्वित्वत्वादिना कालिकसम्बन्ध उभयत्र निवेश्यः । कारणस्य विशेष्यता कार्यस्य समवाय इतिवा अयमेकोऽयमेक इत्यादिसमूहालम्बनादेव तदुत्पत्तेः । युगपदुत्पन्नाभ्यामपेक्षाबुद्धिभ्यामेकस्य द्वित्वादेर्जननेपि न दोषः द्वित्वादौ पुम्भेदेन वैजात्यभेदानभ्युपगमात् सङ्करप्रसक्तेरिति प्राञ्चः ।

मध्यास्तु एवं सति युग्मभेदेन कारणताभेदेऽत्यन्तगौरवेण तत्तद्व्यक्तित्वावच्छिन्नविशेष्यतयैकत्वप्रकारकतत्पुरुषीयबुद्धित्वेन कारणता। तद्व्यक्तिनिष्ठसमवायेन तत्पुरुषीयद्वित्वत्वादिना कार्यता कल्प्या। नचायमेक इति बुद्धेरपि तदापत्तिः तद्व्यक्तिभिन्नसमवेतातिरिक्तस्य द्वित्वादेरलीकतया तद्भिन्नतत्तद्व्यक्तिसमवेतद्वित्वादियावद्विशेषसामग्रीविरहात्। अतएव घटयोर्द्वित्वक्षणे पटादौ न तदापत्तिः। नच क्रमिकाभ्यां बुद्धिभ्यां जनितस्य द्वित्वादेः क्षणिकत्वं स्यात् उत्पत्तिक्षण एवाद्यापेक्षाबुद्धेर्विनाशादिति वाच्यम्, स्वप्रतियोगिकालीनत्वस्वप्रतियोगिजन्यत्वाभ्यां बुद्धिनाशस्य द्वित्वादिनाशकत्वेन प्रथमबुद्धिनाशस्य तदनाशकत्वात्। तत्पुरुषीयद्वित्वत्वादयश्च जातिविशेषाः। युगपदुत्पन्नाभ्यां बुद्धिभ्य च नानैव द्वित्वादि जन्यते। लाघवेन तादृशकारणताकल्पनादुत्तरं कल्प्यत्वेन गौरवस्य फलमुखत्वात्। समनियतानां ध्वंसैक्येन तद्भेदकल्पनस्याभावात्। अत्रैकत्वमत्रैत्वमिति बुद्धेर्जनकत्वे तु विशेष्यतादिस्थाने विषयता निवेश्या। तथा सेनावनादौ अनेकसंख्यानुरोधेन निर्धर्मितावच्छेदकमपि ज्ञानं कारणमित्याचार्यवचनानुसरणे तु तत्तद्व्यक्तित्वावच्छिन्नत्वस्थाने तत्तद्व्यक्तिमात्रवृत्तित्वमुपादेयम्। त्रित्वाद्युत्पत्तिक्षणे द्वित्वाद्यनुत्पत्तौ च तत्पुरुषीयद्वित्वादिकं प्रति तत्पुरुषीयत्रित्वादिसामग्री प्रतिबन्धिका कल्प्या द्वित्वादिभिन्नतत्पुरुषीयापेक्षाबुद्धिजन्यानेकसंख्यासामग्री तथा इति केचित्।

परमार्थतस्तु न्यूनसंख्यायां नाधिकसंख्या सामग्री प्रतिबन्धिका 'एते पञ्च' इत्यादिप्रतीतिक्षणे 'रामकृष्णाविमौ द्वौ' 'एतेन्ये त्रय' इत्यादिप्रतीतेः सर्वानुभवसिद्धत्वात्। तत्पुरुषीयद्वित्वादिलक्षणकार्यवैचित्र्यन्तु प्रतिबन्धकसजातीयभावादिलक्षणकारणवैचित्र्यादिति संक्षेपः।

इति अपेक्षाबुद्धेर्द्वित्वादौ कारणतादर्शनम्।

व्यञ्जकत्वमेव तस्या मीमांसकानाम्। तथाहि एतदुभयवृत्तिद्वित्वप्रत्यक्षत्वादिना तदेतद्व्यक्तित्वावच्छिन्नतदुभयविशेष्यताकैकत्वबुद्धित्वादिना समवायेन कार्यकारणभावः उक्तसमूहालम्बनस्यैव व्यञ्जकत्वात्। नचापेक्षाबुद्धिं विना चक्षुःसन्निकर्षादिना द्वित्वादौ चाक्षुषादिसामान्यस्यापत्तिः। द्रव्यसमवेतं चाक्षुष

हि द्विविधम् अनेकसंख्याविषयकं तदन्यविषयकं च । तत्राद्ये अपेक्षाबुद्धिरेव विशेषसामग्री । अन्त्ये चानेकसंख्याभेदस्य कारणत्वमिति प्राञ्चः ।

मध्यमास्तु एवं युग्मभेदेन व्यञ्जकताभेदे अत्यन्तगौरवात्, तद्व्यक्तिसमवेतानेकसंख्याप्रत्यक्षत्वेन तद्व्यक्तित्वावच्छिन्नविशेष्यताकैकत्वबुद्धित्वेन कार्यकारणभावो लाघवात् । एकमात्रधर्मिकैकत्वबुद्धौ च न तदापत्तिरतद्व्यक्तिसमवेतानेकसंख्यायास्तद्व्यक्तिभिन्नसमवेतत्वनियमेन' तद्व्यक्ति समवेतानेकसंख्याप्रत्यक्षीययावद्विशेषसामग्रीविरहात् । नच तथापि सन्निकर्षकार्यसामान्यस्यापत्तिः, तत्कार्यं हि द्रव्यसमवेतप्रत्यक्षं त्रिविधम् तद्व्यक्तिसमवेतानेकसंख्याविषयकं तद्व्यक्त्यसमवेतानेकसंख्याविषयकम् अनेकसंख्यान्यविषयकं च । तत्र नाद्यमापाद्यम् उक्तरीत्याऽपेक्षाबुद्धिरूपविशेषसामग्रीबाधात् । अतएव न द्वितीयमपि अपरतत्तद्व्यक्तिसमवेतानेकसंख्याविषयकान्यस्य तादृशप्रत्यक्षस्यालीकत्वात् । नापि तृतीयम् तत्रानेकसंख्याभेदस्यापि कारणत्वादिति वदन्ति । तन्मन्दम्, वह्निघटद्वित्वप्रत्यक्षक्षणे घटैकत्वबुद्धिं विनापि पटघटद्वित्वप्रत्यक्षापत्तेः सन्निकर्षसत्त्वात् यावद्विशेषसामग्रीबाधाभावाच्चेतिध्येयम् ।

नूतनास्तु अनेकसंख्यावृत्तिलौकिकविषयतया तत्पुरुषीयप्रत्यक्षत्वेन व्याप्यत्वसम्बन्धेन तत्पुरुषीयबुद्धित्वेन कार्यकारणभावः । व्याप्यत्वन्तु एकत्वप्रकारतानिरूपितविशेष्यतावत्पर्याप्तत्वं सन्निकर्षमात्रादितः कार्यसामान्यापत्तिरुक्तरीत्यैव निरसनीया । अनेकसंख्यात्वस्यापि कारणसम्बन्धत्वेन तादात्म्येनानेकसंख्यायाः पृथक्कारणत्वेन वा न संयोगद्वित्वादौ कार्योपत्तिरिति प्राहुः ।

एके तु उक्तसम्बन्धेनोक्तरूपेण कार्यता तत्तद्व्यक्तित्वावच्छिन्नतत्तद्विशेष्यतान्यतमसम्बन्धेन बुद्धेरभावव्यक्तिः स्वाश्रयसमवेतत्वेन प्रतिबन्धिकेत्येव बुद्धेर्व्यञ्जकत्वशब्दार्थः । तेन नैकधर्मिकैकत्वबुद्धितः कार्यप्रसङ्गः । यद्वा अन्यतमत्वेनानुगमं विनापि तावद्विशेष्यताव्यक्तिप्रत्येकपर्याप्तप्रतियोगितावच्छेदक-

---

१ 'तद्व्यक्तिभिन्नसमवेतत्वनियमेन' एतावान् पाठोऽधिकः आदर्शे । पुस्तकान्तरे तु 'तद्व्यक्तिभिन्नसमवेतानेकसंख्याप्रत्यक्षीयेत्यादिमात्रमस्ति ।

सम्बन्धताकोऽभावः स्वीकार्यः स्वप्रतिबन्धकः। अतएव कारणसम्बन्धपरं सम्बन्धाननुगमो न दोषायेति प्राचीनवाक्यम्। एकेन केनचित् सम्बन्धेन तावद्भिः सम्बन्धैर्वा कारणाभावस्य कार्यवति सत्त्वेपि क्षति विरहात्। उक्ताभावस्य [1]केनचिदेकेन सम्बन्धेन कारणवत्यसतः कारणताघटकत्वादित्याहुः।

यत्तु एकद्रव्यमात्रवृत्तिधर्मावच्छिन्नत्वेन विशेष्यतानुगमनीया। तादृश धर्मवत्त्वं च विशेषणताविशेषेण द्रव्यद्वयावृत्तित्वे सति द्रव्यवृत्तित्वम्। तेन तत्तद्व्यक्तिवृत्त्यखण्डप्रतियोगिताधेयताविषयतादिव्यक्तिरूपेदन्त्वावच्छिन्नविशेष्यताकबुद्धेरेव तथात्वं पर्यवस्यति। तद्रूपादिरूपेदन्त्वस्यान्यत्र व्यवहार्यत्वेपि न क्षतिः। अनेकवृत्तिप्रतियोगितादिवारणाय सत्यन्तम्। द्रव्यत्वादिवारणाय विशेषणाया द्रव्यवृत्तित्वमुपात्तम्। [2]प्रतियोगितावदेकवारणाय विशेष्यतावच्छेदकताऽनवच्छिन्ना उपादेया। तत्र प्रतियोगितात्वादिना तत्तत्प्रतियोगितानां भानात्। अखण्डधर्मातिरिक्तविषयतानामेव किञ्चिद्रूपावच्छिन्नत्वनियमाभ्युपगमात्। द्रव्यान्तरेदन्त्वभ्रमरूपबुद्धिस्तु संग्राह्यैव। नच संयोगादौ कार्यापत्तिः, तादात्म्येनानेकसंख्याया अपि हेतुत्वात्। पूर्वरीत्या द्वित्वादौ सन्निकर्षादिमात्रात्तत्कार्यप्रसङ्गभङ्गाय च अनेकसंख्याभेदस्य तद्भिन्नप्रत्यक्षे हेतुत्वमित्याहुः। तत्तुच्छम्, तादृशप्रतियोगितादिरूपस्येदन्त्वस्यानेकवृत्तित्वग्रहकाले तदवच्छिन्नविशेष्यताकैकत्वबुद्धावतिप्रसङ्गात्। तथात्वेन ज्ञायमानत्वस्यापि कालादिभेदेनातिप्रसक्तत्वात् तल्लक्षणादिनिवेशेत्यन्ताननुगमात् इति वैशेषिकन्यायानुसारेण जन्यताविशेषस्यासम्बन्धेनापेक्षाबुद्धित्वेनानेकसंख्यावृत्तिविषयतया प्रत्यक्षत्वेन पुरुषभेदेन हेतुहेतुमद्भावः। लौकिकविषयतया तत्तत्पुरुषीय प्रत्यक्षं प्रति तत्तत्पुरुषीयबुद्ध्यजन्यानेकसंख्याभेदः कारणमिति निष्कर्षः।

इति व्यञ्जकतादर्शनम्।

द्वित्वादेर्निमित्तीभूताया अपेक्षाबुद्धेर्नाशो नाशकः ज्ञानादेरिव सहवर्त्तिनाशनाश्यत्वे तस्य क्षणद्वयस्थितौ द्वे द्रव्ये इत्यादिप्रत्यक्षानुपपत्तिरित्युक्तम्। अयोग्य-

---

१ 'केनचिदेकेनापि' इति पुस्तकान्तरे। २ 'प्रतियोगितावानेक इत्यादिवारणाय' इति पुस्तकान्तरे।

द्वित्वादेरपि स एव नाशकः क्लृप्तत्वात् । नाशकान्तरकल्पने गौरवात् । एकत्वादेरिवाश्रयनाशनाश्यत्वेऽपेक्षाबुद्धिनाशोत्तरं संनिकर्षात् द्वित्वादेः प्रत्यक्षापत्तेः । किञ्चैवं द्वित्वपृथक्त्वादेर्द्वित्वादितुल्ययोगक्षेमतया युगपदुत्पन्नयोर्द्वित्वद्विपृथक्त्वाद्योः समूहालम्बनोत्तरमेकैकमात्रस्य प्रत्यक्षं न स्यात् । तदुभयन्त्वीन्द्रियग्राह्यम्, तुल्यदेशकालं सत्तुल्यप्रत्यक्षविषयो भवति तदुभयं प्रति नियतव्यञ्जकव्यङ्ग्यं न भवति इति व्याप्तेः सर्वसिद्धत्वात् । तादृशव्यङ्ग्यत्वं तु परम्पराविषयकप्रत्यक्षविषयत्वमिति ।

तत्र यद्यपि प्रतियोगितयाऽनेकसंख्यानाशत्वेन उपधानरूपस्वप्रतियोगिजन्यतया बुद्धिनाशत्वेन न कार्यकारणभावः । आश्रयनाशनाश्ये भगवद्बुद्धिजद्वित्वादौ च व्यभिचारात् । नच नाशत्वेनैव नाशकता सम्बन्धश्च स्वप्रतियोगिजन्यत्वम् । जन्यता विलक्षणा निविशते । सा च द्विविधा समवायिनिरूपिता निमित्तीभूतबुद्धिकालोपाधिनिरूपिता च । तेन न व्यभिचारः । भगवद्बुद्धिजद्वित्वादेः कालोपाधिनाशेन नाशादितिवाच्यम्, पाकनाशाद्रूपादिनाशापत्तेः, जन्यतावैलक्षण्यस्य दुर्वचत्वात् । जन्यतामात्रस्य निवेशे दण्डादिनाशे घटादिनाशप्रसङ्गात् । तथापि बुद्धिकालोपाधिनिरूपितजन्यताविशेषः सम्बन्धोऽन्ततोऽन्यतरत्वादिनापि निवेश्यः । एवं कार्यसम्बन्धोऽपि प्रतियोगिताविशेषः कार्ये वा नाशे नाशवदन्यत्वं विशेषणम् । नाशवत्वं च स्वाधेयत्वस्वप्रतियोगिसमवेतप्रतियोगित्वोभयसम्बन्धेन बोध्यम् । दैशिकविशेषणताविशेषेण वा वृत्तिमत्वम् । उपधानं च स्वप्रतियोग्याधेयत्वम् । अतो न क्षणरूपकालोपाधिनाशेन क्षणिकतापत्तिः । विनश्यदवस्थ्या च बुद्धिर्न द्वित्वादिकं जनयति उत्पत्तिसम्बन्धेन जनकत्वात् । पूर्वत्वादिमात्रस्योपधानस्य निवेशे तत्र क्षणिकताया दुर्वारत्वापत्तेः । एवमनेकपृथक्त्वादावपीति सम्प्रदायः ।

एके तु ईश्वरापेक्षाबुद्धेर्न द्वित्वादौ[1] जनकता मानाभावात् । अथैवं सर्गाद्यकाले परमाणुद्वये द्वित्वानुत्पादे द्व्यणुकेऽणुपरिमाणं द्व्यणुकत्रये त्रित्वाद्यनुत्पादे

१ 'द्वित्वादौ' इति पुस्तकान्तरे नास्ति ।

च त्रसरेणौ महत्त्वं च न स्यादिति चेत्, न सर्गाद्यकालकारणतयैव परमाणुद्वित्व-द्व्यणुकत्रित्वयोरुत्पादोपपत्तेः ।

यद्वा परमाणुपरिमाणात् द्व्यणुके निकृष्टाणुपरिमाणस्य ततएव च त्रसरेणौ निकृष्टमहत्त्वस्योत्पादोपपत्तौ परमाणुद्वित्वद्व्यणुकत्रित्वयोरेव मानाभावः सर्गाद्यकाले तादृशद्वित्वादीनां स्वपर्याप्त्यधिकरणसमवेतत्वेन तत्कारणतानां च कल्पने गौरवात्। सामान्यतो द्वित्वादेर्जनकत्वे कपालादिद्वित्वादिना घटादावपि तादृशाणुत्वादेरुत्पादप्रसङ्गात्। नचैवं कारणत्वञ्चान्यत्र परिमाण्डल्यादिभ्य इति भाष्यविरोधः, तस्य मनःपरिमाणपरत्वेनाप्युपपत्तेः। किञ्च कस्याप्यपेक्षाबुद्धिर्न द्वित्वादिकं जनयति नवा तन्नाशो नाशयति मानाभावात्। एकत्वाश्रयनाशाभ्यामेव तदुभयोरुत्पत्त्युपपत्तेः। सामान्यतः पर्याप्त्या सजातीय-प्रतिबन्धकत्वादेव च न सन्तानप्रसङ्गः। पुरुषभेदेन बुद्धेः कारणत्वानां द्वित्वादीनां तद्वैजात्यानां[1] सजातीयप्रतिबन्धकत्वानामपेक्षाबुद्धेश्चिरस्थित्यर्थमनेकसंख्याप्रत्यक्षसामग्र्यादेः प्रतिबन्धकत्वानामुक्तानां च कल्पनेऽत्यन्तगौरवात्, नित्यमात्रवृत्त्यनेकसंख्यानां च सहवर्त्तिनाशो नाशकः तथापि लाघवात्। अथैवमपेक्षाबुद्धिं विनापि यावदाश्रयसन्निकर्षादितो द्वे द्रव्ये इत्यादिप्रत्यक्षमापद्यत इत्युक्तमितिचेत्, न, मीमांसकैरिवास्माभिरपि बुद्धेर्व्यञ्जकत्वाभ्युपगमात्। जनकत्वस्य चोक्तात्यन्तगौरवेणानभ्युपगमात्। अतिप्रसङ्गभङ्गाय तत्तत्पुरुषीय-प्रत्यक्षं प्रति तत्तत्पुरुषीयापेक्षाबुद्ध्यजन्यानेकसंख्याभेदकारणत्वानां कल्पने गौरवाच्च। मया सर्वैरेव पुरुषैरभिन्नस्यैव द्वित्वादेर्ग्रहणाभ्युपगमादिति। द्वित्व द्विपृथक्त्वाद्योश्च परस्परविलक्षणबुद्ध्यजन्यत्वेऽपि तादृशबुद्धिव्यङ्ग्यत्वाभ्युपगमादेव प्रतिनियतव्यञ्जकव्यङ्ग्यत्वोपपत्तिः द्विपृथक्त्वादौ मानाभावो वेति वदन्ति।

नूतनास्तु तद्बुद्धिर्व्यञ्जिकाऽपि न यावदाश्रयसन्निकर्षस्य तत्प्रत्यक्षस्य वा तद्भेदज्ञानस्य च सत्त्वेऽपेक्षाबुद्धिं विनापि द्वे द्रव्ये इत्यादिप्रत्यक्षस्येष्टत्वात्। तद्व्यङ्ग्यत्वप्रवादस्य तद्विषयत्वमात्रोपपादितत्वादिति प्राहुः।

इति बुद्धेर्जनकत्वादिभङ्गदर्शनम्।

---

१ '°सजातीयप्रतिबन्धकत्वानां वैजात्यानाम्' इति पुस्तकान्तरेऽधिकः पाठः ।

ननु सर्वद्रव्येषु नित्यमेकमेव हि द्वित्वादिकमस्तु । नचैवं जातित्वापत्तिः, व्यासज्यवृत्तित्वात् इष्टत्वाद्वा । द्वित्वत्रित्वादीनां तुल्यवृत्तिकत्वेऽपि प्रत्ययवैलक्षण्येन भेदोपपत्तेः । तुल्यपर्याप्तत्वं वा तुल्यशब्दार्थः । द्वयोर्द्वयोर्द्वित्वस्य त्रिषु त्रिषु त्रित्वस्यैवमन्यस्यापि पर्याप्तेरभ्युपगमात् । एवं गुणादावपि द्वित्वादिव्यवहारो मुख्य एव । अथ यावदाश्रयसन्निकर्षादेरसम्भवात्सन्निकर्षमात्रस्यातिप्रसक्तत्वात् प्रत्यक्षनियमः कथम् । इत्थं च व्यासज्यवृत्तिविषयतया प्रत्यक्षं प्रति स्वविषयपर्याप्तत्वेन प्रत्यक्षत्वे पुरुषभेदेन यावदाश्रयसन्निकर्षस्य[1] कारणत्वात् ।

यद्वा प्रतिव्यक्तिवृत्तिद्वित्वादिकं भिन्नमेव द्वित्वादिपर्याप्त्या साङ्कर्यस्याभावात् वह्निघटद्वित्वघटपटद्वित्वाद्योः सादृश्येऽपि न दोषः । तथाचोक्तलौकिकविषयतामात्रेण प्रत्यक्षं प्रति विषयपर्याप्ततासम्बन्धावच्छिन्नप्रत्यक्षाभावस्य स्वाश्रयसमवेतत्वपर्याप्त्युभयसम्बन्धेन प्रतिबन्धकत्वनिष्कर्षेऽपि न क्षतिः । गुणकर्मणोरेवासमवायिकारणत्वमिति च नियमः । तेन जातित्वेऽपि न परिमाणाकारणत्वक्षतिरितिचेत्, मैवम्, द्वित्वमुत्पन्नं द्वित्वं नष्टमित्यादिप्रतीतेः द्वयं संख्यातं त्रयं संख्यातं द्वित्वादिकं संख्येत्याद्यनुगतबुद्धिसिद्धसंख्यात्वजातिसत्त्वेन जातित्वायोगाच्च । एतेन एकत्वादिकं व्याख्यातं वेदितव्यम् ।

केचित्तु सर्वत्रैकत्वस्यैकत्वे प्रत्यक्षं न स्यात् । व्यासज्यवृत्तिगुणप्रत्यक्षं प्रति यावदाश्रयप्रत्यक्षस्य कारणत्वात्, तादृशगुणत्वस्य जातिविशेषस्य संख्यात्वादिना सङ्करभयेनैकत्वादिसाधारण्यादिति प्राहुः । तत्तुच्छम्, अनन्तैकत्वकल्पनापेक्षया लाघवेन तवैकत्वान्यत्वस्य निवेशयितुमौचित्यात् । यावदाश्रयप्रत्यक्षशब्दस्य स्वविषयपर्याप्तत्वेन प्रत्यक्षपरतायामेकत्वस्य प्रत्येकपर्याप्तत्वाभ्युपगमे [2]दोषास्पर्शात् । प्रागुक्ताभावरूपप्रतिबन्धकाभावपरतायां तु पर्याप्तत्वसम्बन्धस्य प्रतिबन्धकतावच्छेदके निवेशात् ।

---

१ 'यावदाश्रयप्रत्यक्षकारणत्वात्' इति पुस्तकान्तरे ।

२ 'प्रत्येकपर्याप्तत्वे दोषास्पर्शात्' इति पुस्तकान्तरे ।

परमार्थस्तु पर्याप्त्यन्यसम्बन्धेन वृत्तिमत्त्वमेव निविष्टमिति । न च तत्र तादृशगुणत्वाख्यो जातिविशेषः, न वा सा पर्याप्तिरेकत्वेऽभ्युपगम्यते, तस्मादुक्तप्रतीत्यादिकमेव शरणमिति संक्षेपः ।

इति द्वित्वादेर्जातित्वभङ्गदर्शनम् ।

उत्तरदेशसंयोगे पूर्वदेशसंयोगः प्रतिबन्धकः तथाहि अवच्छेदकतासम्बन्धेन तदीयकर्मजसंयोगे क्रियाविरहविशिष्टस्य तन्निष्ठसंयोगस्यावच्छेदकतया प्रतिबन्धकत्वम् । उत्तरदेशे निष्क्रियजलादिसंयुक्तेऽपि घटादिसंयोगोदयात् अङ्गुलीशाखासंयोगसत्त्वे[1] संयोगजहस्तसंयोगोदयाच्च तत्कर्मजेत्युपात्तम् । उत्तरदेशे गगनादिसंयोगावच्छेदकावच्छिन्नघटादिकर्मजसंयोगात्तन्निष्ठेति । स्तिमितपृष्ठलग्ने वा पटादौ जलादेः शरीरादेर्वा संयोगो न [2]क्रियाविरहविशिष्टः पटादिना सहैव जलशरीरादेः क्रियोत्पत्तेः । एवं [3]लाक्षापक्षादावपि । तद्वैशिष्ट्यं च समानावच्छेदकत्वेन । तेन सकर्मणः कर्मविरहवत्त्वेऽपि न क्षतिः । अवच्छेदकत्वं त्वनवच्छिन्नं ग्राह्यम् । तेन दीर्घस्य तन्त्वादेः सक्रियस्य क्रियानवच्छेदकांशाद्यवच्छेदेन तद्विरहावच्छेदकत्वेऽपि न क्षतिः[4] । कार्यादिसम्बन्धेऽपि तथैव बोध्यः ।

---

१ अङ्गुलीशाखासंयोगात् हस्तशाखासंयोगः, ततोहस्ततरुसंयोगः तस्य हस्तनिष्ठस्यावच्छेदकतयाऽङ्गुलावुत्पादो न स्यात्, हस्तनिष्ठस्य शाखासंयोगस्यावच्छेदकतयाङ्गुलौ सत्त्वेन तेन प्रतिबन्धादिति भावः । २ पृष्ठावच्छेदेन पटसंयुक्तशरीरकर्मणा पृष्ठावच्छिन्नोत्तरदेशसयोगस्य शरीरनिष्ठस्यावच्छेदकतासम्बन्धेन पृष्ठे समुत्पादो न स्यात् शरीरनिष्ठपटसंयोगस्य तत्रावच्छेदकतया सत्त्वादतः क्रियाविरहविशिष्टेति इति भावः । ३ लाक्षासंयुक्तकाष्ठक्रियायां पक्षसंयुक्तपक्षिक्रियायाञ्च लाक्षापक्षादौ क्रिया भवतीत्यर्थः । ४ यत्र शरीरसंयुक्ततन्त्वादेः शरीरे कर्मवति सति पृथक् क्रिया नोपलभ्यते तत्र तन्तौ सर्वावयवावच्छेदेन सक्रियत्वम् । यत्र त्वग्रावच्छेदेनैव तन्तौ पृथक् क्रिया तत्र क्रिया न सर्वावयवावच्छेदेनेत्यभिप्रायः । तथा च यत्र यत्र हस्तावच्छेदेन तन्त्ववच्छेदेन च शरीरपटौ संयुक्तौ पटावयवे शरीरनिष्ठपटसंयोगाच्छेदकेऽग्रावच्छेदेन क्रिया तत्र कर्मवतः शरीरस्य हस्तावच्छेदेन तरुसंयोगो न स्यादतोऽनवच्छिन्नमवच्छेदकत्वं बोध्यम् ।

वस्तुतः[1] कालिकसम्बन्धेन तदवच्छिन्नतदीयकर्मजसंयोगे तदवच्छिन्नतन्निष्ठसंयोगसामान्याभावः स्वप्रतियोग्यनधिकरणवृत्तित्वविशिष्टकालिकसम्बन्धेन हेतुः। तेन क्रियाविरहविशिष्टीभूय पूर्वदेशावयवमात्रे वर्त्तमानस्य संयोगस्य सत्त्वेऽपि तत्कर्मजः उत्तरदेशसंयोगो न प्रसज्यते न वा संयोगवत्यपि काले संयोगाभावसत्त्वेऽपि स प्रसज्यते अवच्छेदकभेदप्रवेशे गौरवं प्रामाणिकम्।

केचित्तु समवायेन तत्कर्मजसंयोगे तेनैव क्रियाविरहविशिष्टस्य तन्निष्ठसंयोगः प्रतिबन्धकः पूर्वदेशबद्धमूलस्य पटादेरग्राद्यवच्छिन्नकर्मणा नोत्तरदेशसंयोगः किन्त्वग्रकर्मजोऽग्रादेरेव। नातोऽवच्छेदकप्रवेशः। साक्षात्परम्परया वाऽवयवसंयोगस्यैव तत्र कारणत्वान्न बहुतरक्षणविलम्बः। न चोक्तपटादेरुक्तकर्मणा तन्त्वाद्यन्तरेणापि आरम्भकसंयोगो न स्यात् कर्मजस्यैव द्व्यणुकस्थले द्रव्यारम्भकत्वकल्पनादिति वाच्यम्, तत्र मूलाद्यवच्छिन्नसंयोगनाशानन्तरं पुनर्मूलाद्यवच्छिन्नसंयोगस्यारम्भकसंयोगस्य च युगपदुत्पत्तिस्वीकारादित्याहुः।

परे तु तदवच्छिन्नतत्कर्मजसंयोगे समवायेन तदवच्छिन्नतन्निष्ठसंयोगः प्रतिबन्धको लाघवात्[2]। नच [3]अन्तरामूर्त्तसंयोगस्याविरोधित्वात्[4] [5]क्रियायाश्चिरस्थायित्वं[6] न स्यादिति वाच्यम्, [7]इष्टत्वात्, प्रहरं चलतीत्यादिप्रतीतेर्वेगादि

---

१ पटसंयुक्तशरीरादिक्रियास्थले पटस्य सक्रियत्वेन शरीरपटसंयोगोऽपि नश्यत्येव क्रियास्वभावात्। तदनुपलब्धिश्चोत्तरसंयोगक्षणे पुनः पटशरीरसंयोगोत्पत्तेरित्याशयेनाह वस्तुत इति। २ पटसंयुक्तक्रियास्थले पटसंयोगनाशतत्संयोगान्तरोत्पत्तिकल्पनागौरवाभावेन लाघवादित्यर्थः। एवं मूर्तसंयोगस्य प्रतिबन्धकत्वे पृष्टलग्नपटशरीरकर्मजसंयोगानुत्पत्तिवारणाय क्रियाविरहविशिष्टत्वस्य प्रवेशनीयतया तस्यात्राप्रवेशेनलाघवादित्यर्थश्च। ३ तदवच्छिन्नेति शेषः। ४ उत्तरदेशसंयोगं प्रतीतिशेषः। ५ आत्मसंयोगनाशन झटिति जात उत्तरसंयोगे क्रियाया झटिति नाशादिति शेषः। यत्संयोगात् क्रियोपरमः प्रत्यक्षः स उत्तरदेश इहाभिमतः। ६ यदा तु मूर्तसंयोगसाधारण्येन तदवच्छिन्नतन्निष्ठसंयोगत्वेन विरोधित्वम् तदान्तरामूर्तें संयोगस्योत्तरसंयोगविरोधित्वेन तद्विलम्बात् क्रियायाः स्थायित्वं भवत्युपपन्नम्। ७ अन्तरामूर्तान्तरस्यावस्थितस्याप्युत्तरदेशत्वस्येष्टत्वात् क्रियाया नाशो भवत्येव सजातीयक्रियान्तरस्य झटित्युत्पत्त्या क्रियानाशस्य स्फुटमप्रत्यक्षत्वात् अविवेकिनां न तत्रोत्तरदेशत्वव्यवहार इत्यस्थायित्वमिष्टमेवेति भावः।

जन्यकर्मसन्तानावगाहित्वात् । गगनत्वादेरजातितया त्यागः, घृतादिस्तिमितपटादेरुत्तरसंयोगात् पृथिव्यादित्यागः, वाय्वादिसंयोगाश्च नावश्यकाः । न चैतादृशप्रतिबन्धकाभावस्योत्तरदेशे सत्त्वाद् विभागक्षणएव तत्संयोगापत्तिरिति वाच्यम्, कालिकसम्बन्धेन तादृशाभावस्य कारणत्वात्, तेनैव कार्यत्वाच्च । न च यत्र पटादेः सर्वावच्छिन्नेन कर्मणा तादृश एवात्मसंयोगः ततोऽग्राद्यवच्छिन्नकर्मान्तरजः आत्मविभागः ततः तत्संयोगनाशः मूलाद्यवच्छिन्नक्रिया च ततः अग्रादौ उत्तरदेशेनेव मूलादावपि तेन समं संयोगः स्यात् प्रतिबन्धकनाशादिति वाच्यम्, तत्र नानात्मसंयोगोपगमात् । न च गौरवम्, त्वयाप्युत्तरमूलाद्यवच्छिन्नसंयोगोपगमादित्याहुः[१] ।

वस्तुतस्तु तद्व्यक्तित्वादिनैव तथाभावः तदीयकर्मजन्यतावच्छेदकजातेर्दुर्वचत्वात् । एतद्घटीयकर्मजन्यतावच्छेदकजात्यभाववति तत्पटमठसंयोगे तत्पटकर्मजन्यतावच्छेदिकायाः तद्घटमठसंयोगे च केवलमाद्योक्तजातेः तद्घटतत्पटोभयकर्मजसंयोगे च द्वयोः सत्त्वेन साङ्कर्यात् । अत्र नानासंयोगोपगम इत्येकदेशिनः । ननु कर्मसंयोगे पूर्वदेशविभाग एव हेतुरस्तु । न च यत्र कपाले पूर्वदेशविभागः, घटः, वेगाः, तत आत्मसंयोगनाश[२]ः, घटे वेगजवेगश्च इदानीं घटे संयोगो न जायते असमवायिनः सहवर्त्तितया कारणस्य नाशात्, ततः कपाले उत्तरदेशसंयोगः घटे च कर्म, ततोघटे संयोगो जायते, स न स्यात्, विभागस्याभावादिति वाच्यम्, क्रियात्वस्यादृष्टवदात्मसंयोगासमवायिकारणत्वनियमेनात्मविभागानन्तरमेव संयोगोत्पत्त्यङ्गीकारात् । संयोगरूपस्यासमवायिनः सहवर्त्तित्वेनाकारणत्वात् । घटे वेगोत्पत्तिक्षणेऽनन्तवाय्वादिकर्मजसंयोगसम्भवाच्च । न चैवमनन्तसंयोगजविभागादिकल्पने गौरवमिति वाच्यम्, फलमुखत्वादिति चेत्, मैवम् फलमुखगौरवस्यापि दीधितिकारादिभिः दोषत्वोपगमात् । पूर्व संयोगनाशक्षण एवोत्तरसंयोगाभ्युपगमे विभागस्यापि कारणतायां

---

१ तस्यैव मया मूलावच्छिन्नात्मसंयोगरूपत्वोपगमात् गौरवविरहात् इत्यर्थः ।

२ अत्र कपालपूर्वदेशसंयोगनाशश्च न भवति विभागजविभागानङ्गीकारात् ।

मानाभावाच्च । क्षणविलम्बस्य दुर्ग्रहतया विभागोत्पत्तिक्षण एव संयोगोत्पत्त्यङ्गीकारापत्तेश्चेति संक्षेपः ।

इति पूर्वदेशसंयोगप्रतिबन्धकतादर्शनम् ।

पूर्वदेशसंयोगस्य विभागो नाशकः । ननु विशेषणतासम्बन्धेन द्रव्यनाशानाश्यसंयोगनाशत्वेन समवायेन विभागत्वेन कार्यकारणभावः । तथाचान्यकर्मजविभागवतो विना कर्मादिकं नाकाशादिसंयोगनाशः आकाशादौ तन्नाशोत्पत्त्यधिकरणे नाशकस्य विभागस्याभावादिति वक्तुं न शक्यते अन्यकर्मजविभागवतोर्घटपटाद्योः संयोगनाशप्रसङ्गात् । नापि तद्वृत्तिनाशत्वेन तथात्वम् तत्र च घटादिवृत्तिर्विभागो न पटादाविति न दोष इति वक्तुं शक्यम्, मूलाद्यवच्छिन्नपटादिविभागेनाग्राद्यवच्छिन्नतत्संयोगनाशापत्तेः । नापि समानावच्छेदकत्वं प्रत्यासत्तिरेतावता निवृत्तिः । घटपटाद्योः कम्बुमूलाद्यवच्छिन्नजलतेजोवाय्वादिविभागेन तयोस्तदुभयावच्छिन्नसंयोगनाशोत्पत्तेः । नापि तदुभयावच्छिन्नविभागः तदुभयावच्छिन्नसंयोगनाशे कारणम्, अंशुद्वयाद्यवच्छिन्नजलादिविभागात् तदंशुद्वयाद्यवच्छिन्नघटसंयोगनाशापत्तेः । नापि तदुभयातिरिक्तानवच्छिन्नो [1]विभागः तथा एकाङ्गुल्यवच्छिन्नपाणितरुविभागादिना पञ्चाङ्गुल्यवच्छिन्नपाणितरुसंयोगादिनाशस्यानुपपत्तेः । लाघवेन तत्र पञ्चाङ्गुल्यवच्छेदेनैकस्यैव संयोगस्याङ्गीकारात् । न च क्लृप्तकारणाभावात् तत्र तन्नाशो नाङ्गीकार्य इति शङ्कनीयम् क्रमादेकैकावच्छिन्नविभागेषु जातेष्वपि तत्तत्संयोगोपलम्भप्रसङ्गात्, एकस्यापि विभागस्यानाशकत्वात् । पञ्चभिर्विभागैर्विनापि पञ्चावच्छिन्नैकविभागेनापि तन्नाशात्, पञ्चानामकारणत्वात्, गौरवान्मानाभावाच्च । किञ्च तत्तत्संयोगनाशानुपगमे तदङ्गुल्यवच्छेदेन पाण्युत्तरदेशसंयोगो न स्यात् पूर्वसंयोगस्य प्रतिबन्धकस्य सत्त्वात् ।

नच कर्मजसंयोगे पूर्वसंयोगस्य तथात्वेन तदङ्गुलीसंयोगजतदवच्छिन्नोत्तरसंयोगेन बाधकमिति वाच्यम्, तथापि स्वजन्यसंयोगस्य कर्मनाशकतया

---

१ तदुभयातिरिक्तानवच्छिन्नस्तदुभयावच्छिन्नो विभागः' इति पुस्तकान्तरे ।

प्रतिबन्धवशात् कर्मजसंयोगाभावे तदङ्गुल्यवच्छिन्नपाणिकर्मणो बहुकालस्थीयत्वप्रसङ्गात् । तदिष्टत्वे तत्प्रत्यक्षादिप्रसङ्गात् । नापि तदुभयातिरिक्तानवच्छेद्यसंयोगनाशं प्रति तदुभयातिरिक्तानवच्छेद्यविभागः कारणम् । एवं पञ्चातिरिक्तानवच्छेद्यविभागोऽपि तादृशसंयोगनाशे तथा । इत्थञ्चैकाङ्गुल्यवच्छिन्नविभागादपि पञ्चाङ्गुल्यवच्छिन्नसंयोगनाशोपपत्तिरित्यतो निरतारः । मूलाद्यवच्छिन्नपटपरमाण्वादिविभागादुक्तघटपटादिसंयोगस्य नाशापत्तेः तद्विभागजविभागयोरपि कम्बुमूलोभयादतिरिक्तानवच्छेद्यतया परमाण्वाद्यवच्छेदकविरहात् ।

अथ द्रव्यनाशानाश्यतदुभयसमवेतसंयोगनाशे तदुभयसमवेतविभागः समानावच्छेदकतया हेतुः । तेन मूलाद्यवच्छिन्नघटपटादिविभागादग्राद्यवच्छिन्नतदुभयसंयोगस्य न नाशप्रसङ्गः । मूलादावेव अवच्छेदकतासम्बन्धेन तत्प्रसङ्गवारणाय[१] च तत्तत्संयोगनाशे तत्तत्संयोगस्य तयैव प्रत्यासत्त्या हेतुत्वं विशिष्य वाच्यमिति चेत्, न उक्तस्थले पञ्चस्वङ्गुलीषु अवच्छेदकता, संयोगनाशोत्पादेन तासु च विभागस्याभावात् व्यभिचारादिति चेत् । इह सम्प्रदायः समवायसम्बन्धावच्छिन्नव्यापकतासम्बन्धेन विभागो हेतुः, तादृशसंयोगवृत्तिप्रतियोगितया नाशः कार्यं इति न दोषः । व्यापकत्वं च स्वसमवायिवृत्त्यन्योन्याभावीयसमवायावच्छिन्नप्रतियोगितावच्छेदकतापर्याप्त्यधिकरणत्वम् । अतो नाभावान्तराण्यादाय दोषः ।

नव्यास्तु [२]संयोगत्वविशिष्टोपधायकतासम्बन्धेन स तथा यथा स्मृतिसंस्कारस्थले । एतेनोत्तरसंयोगस्य विभागनाशकत्वं व्याख्यातम् । तत्रापि द्रव्यनाशानाश्यस्य विजातीयविभागस्य नाशे कार्यतावच्छेदकश्च सम्बन्धः

---

१ नाशानन्तरं पुनर्नाशान्तरापत्तिवारणायेत्यर्थः । २ ययोरस्ति संयोग एककर्मणोभयकर्मणा वा तयोरेव विभागो नासंयुक्तयोरिति संयोगस्यास्ति विभागोपधायकत्वम् । जलवाय्वादिकर्मणा यो विभागस्तदुपधायकत्वं घटेन सह जलादिसंयोगस्यैव न पटसंयोगस्येति घटपटसंयोगनाशो न घटजलादिविभागात् । कर्मणो विभागोपधायकत्ववारणाय संयोगत्वविशिष्टेति ।

प्रतियोगित्वम्, विभागत्वविशिष्टस्वप्रयोजकत्वसम्बन्धेन संयोगस्य हेतुत्वम्। स्वप्रयोजकत्वं च स्वजनकसंयोगनाशजनकत्वं स्वप्रतिबन्धकसंयोगनाशकत्वं वा। तेन पूर्वसंयोगनाशस्योत्तरसंयोगाजनकत्वेपि न क्षतिः। सामानाधिकरण्यविशिष्टं स्वपूर्वपूर्वत्वम्। तेन आत्मसंयोगमात्रप्रतिबन्धकत्वेपि न क्षतिः।

नच यत्र विभागोत्तरं मूर्तान्तरकर्मजसंयोगवशान्नोत्तरसंयोगस्तत्र विभागस्य चिरस्थायित्वं स्यादिति वाच्यम्, तत्र सर्वतान्त्रिकस्वारस्येनेष्टत्वात्। आकाशसंयोगप्रतिबन्धकत्वमते पुनराकाशादिसंयोगसम्भवात्। एतेन स्वप्रयोज्यसंयोगस्यैव विभागनाशकत्वे संयोगजसंयोगं प्रति पूर्वसंयोगस्याप्रतिबन्धकत्वमते यत्र पूर्वदेशसंयुक्तायामङ्गुल्यां क्रियाहस्तसंयोगोत्पत्ती ततोऽङ्गुल्यां पूर्वदेशविभागो हस्तेसंयोगजपूर्वदेशसंयोगः ततोऽङ्गुल्यां पूर्वसंयोगनाशः हस्ते विभागजपूर्वदेशविभागः ततोऽङ्गुल्यामुत्तरदेशसंयोगो हस्ते पूर्वदेशसंयोगनाशश्च ततो हस्तेऽङ्गुल्युत्तरदेशसंयोगज उत्तरदेशसंयोगः ततो हस्ते पूर्वदेशविभागनाशः तत्र व्यभिचारः हस्तपूर्वदेशविभागस्य हस्तोत्तरदेशसंयोगेऽप्रयोजकत्वादित्यपास्तम्। पूर्वपूर्वत्वरूपस्य प्रयोजकत्वस्य तत्रापि सत्त्वादिति संक्षेपः।

इति विभागस्य संयोगनाशकत्वदर्शनम्।

एवं कर्मण उत्तरसंयोगो नाशकः। तथाहि कर्मवृत्तिप्रतियोगितया द्रव्यनाशाजन्यनाशत्वेन तादृशोपधायकतया संयोगत्वेन कार्यकारणभावः। नच कर्मानन्तरक्षणे द्रव्यान्तरकर्मसंयोगप्रतिबन्धवशात् यत्र नोत्तरसंयोगः तत्र कर्म चिरस्थायि स्यात् इति वाच्यम्, तत्रापि दृढद्रव्यविभागादिसंयोगान्तरस्वीकारात्। सामीप्यदोषेणाप्यवच्छेदकभेदस्याग्रहात्। ननु पूर्वपूर्वत्वसम्बन्धेन नाशकत्वम् द्वितीयादिक्षणोत्पन्नवाय्वादिसंयोगेनैव कर्मनाशे उत्तरसंयोगानापत्तेः शरादेश्च नाद्येनैव कर्मणा मध्यस्थदूरस्थदेशैः सह संयोगः किन्तु आद्यकर्मजवेगजकर्मसन्तानेन संयोगसन्तानोत्पत्तिः। तथाच सूत्रम् नोदनाद्यमिषोः कर्म तत्कर्मकारिताच्च संस्कारात्तथोत्तरमुत्तरञ्चेति।

एकदेशिनस्तु तत्तद्व्यक्तित्वेनैव नाश्यनाशकभावः। अन्तरावेगकर्मसन्तानकल्पनगौरवाच्चरमसंयोगव्यक्तेरेव तदाद्यकर्मनाशत्वेन लाघवात्। नच

तत्कर्मणि तच्चरमसंयोगव्यक्तेरेव नाशकत्वमास्ताम् अन्यत्र तु सामान्यत एवोक्तरीत्या इति वाच्यम् । तत्कर्मणश्चरमसंयोगं विनापि सामान्यसामग्र्या नाशापत्तेः । यावद्विशेषे कारणस्याकल्पने तद्बाधकस्य कार्यसामान्यानुत्पत्तिप्रयोजकस्याभावात् । नच सर्वत्रैव तत्तत्कर्मनाशे प्रतियोगिनस्तत्तत्कर्मणः कारणत्वमेव यावद्विशेषकारणत्वमिति वाच्यम् । तत्तत्संयोगस्य वा तत्तत्प्रतियोगिनो वा विशिष्य नाशकत्वमित्यत्र विनिगमकाभावात् उपधायकतया संयोगस्य विशिष्य नाशकतया कर्मनाशपुनरुत्पादप्रसङ्गभङ्गादित्याहुः । तन्न, कारणताबाहुल्यस्य व्यक्तिबाहुल्यतो गर्हितत्वात् इति संक्षेपः ।

इति कर्मजसंयोगनाश्यनाशकभाववेगसिद्धिदर्शनम् ।

वेगस्य स्वप्रयोज्यः संयोगो नाशकः । तथाहि प्रतियोगितया वेगनाशत्वेन प्रयोजकतया संयोगत्वेन कार्यकारणभावः । ननु चात्राश्रयनाशनाश्ये व्यभिचारः । न च विशेषणताविशेषेण वृत्तिमत्त्वं कार्ये निवेश्यम् तथासति आश्रयनाशोत्पत्तिक्षणे संयोगतो वेगनाशो न स्यात् उक्तरूपानाक्रान्तत्वात् । [1]क्षणं विलम्ब्य आश्रयनाशतः तन्नाशाभ्युपगमे च उक्तक्षणे संयोगतः कार्यापत्तेः । नच वेगवैजात्ये नाश्यतावच्छेदकमास्ताम् इतिवाच्यम् , कर्मवेगजन्यतावच्छेदकाभ्यां वैजात्याभ्यां सांकर्यापत्तेः । नच कर्मवेगयोः प्रत्येकं जन्यतावच्छेदकद्वयं द्वयमस्तु, तत्र एकमेकं संयोगनाश्यतावच्छेदकम् अपरमपरञ्च तद्विरुद्धं वैजात्यम् । तथाच वेगे कर्मवेगयोः कारणता चतुष्टयं संयोगस्य नाशकताद्वयमिति वाच्यम् । सर्वत्र कर्मणो वेगाच्च विजातीयवेगद्वयोत्पत्त्यापत्तेरिति चेत्, मैवम्, आश्रयनाशानाश्यवृत्तिप्रतियोगितानां सम्बन्धत्वात् ।

यद्वा पूर्ववन्नाशवदन्यत्वं कार्ये निवेश्यम् । नाशवत्त्वं च स्वप्रतियोगिसमवेत प्रतियोगित्वस्वाधेयत्वोभयसम्बन्धेन युगपदुत्पन्नयोश्च नाधाराधेयभावः कालिकः । परमार्थस्तु नाशवदन्यनाशत्वेन जन्यता । नाशवत्त्वं च स्वप्रतियोगिसमवेतप्रतियोगिकत्वस्वाधेयत्वाभ्यां[2] निवेश्यम् । तदाश्रयनाशे तुल्यकालीने

---

१ 'क्षणविलम्बाश्रयणे शतसः तन्नाभ्युपगमे' इति पुस्तकान्तरे पाठः ।
२ 'स्वाधेयप्रतियोगिकत्वाभ्याम्' इति पुस्तकान्तरे ।

तन्नाशे च तदाश्रयनाशो द्वितीयसम्बन्धेन नास्तीति न दोषः। इत्थं च संयोग-नाश्यवेगस्य अष्टक्षणस्थायित्वमायाति। तथाहि शरादौ नोदनात् आद्यं कर्म ततः आद्यो वेगः पूर्वदेशविभागश्चेत्येकः क्षणः १ ततस्तत्संयोगनाशः २ तत उत्तरदेशसंयोगः ३ तत आद्यकर्मनाशः ४ ततो वेगजं द्वितीयं कर्म ५ तत उत्तरदेशविभागो द्वितीयकर्मजद्वितीयवेगश्च ६ ततस्तत्संयोगनाशः ७ तत उत्तरदेशान्तरसंयोगः ८ तत आद्यवेगद्वितीयकर्मणोर्नाशः ९ ततो द्वितीयवेगजं तृतीयं कर्म १० इतिक्रमः। अथ वेगसन्तानप्रसङ्गभङ्गार्थं वेगेपि सजातीय-प्रतिबन्धकत्वाभ्युपगमात् आद्यवेगे सत्येव द्वितीयवेगोत्पत्तिः कथम् इत्थम् कर्मण उत्पत्तिसम्बन्धेन कारणत्वादेव तत्प्रसङ्गभङ्गेऽत्र सजातीयस्याप्रतिबन्धक-त्वात् वेगजवेगं प्रत्येव सजातीयस्य वेगसामान्यस्य वा तथात्वाङ्गीकारात्। अन्यथा तृतीयकर्मानुपपत्तेरिति वैशेषिकाः।

नैयायिकास्तु वेगस्य स्वजन्यकर्मनाशकरीतिरुक्तैव। इत्थं च आद्यवेगस्य पञ्चसु क्षणेषु वेगान्तराणां चतुर्षु स्थितिरायाति। आद्यवेगस्य द्वितीयकर्मोत्तर-क्षणे नाशात् ततो द्वितीयवेगोत्पत्तेरभ्युपगमात्। एवं च सामान्यतो वेगं प्रति न[1] प्रतिबन्धकत्वमिति लाघवम्। चरमं कर्म न वेगं जनयति येन तन्नाशकं वेष्येत[2] तद्व्यावृत्तवैजात्यस्यैव वेगजनकतावच्छेदकत्वात्। अन्यथा चरम-कर्मजवेगेन कर्मसंयोगयोरजननात् आश्रयनाशं यावन्नाशकस्याभावात्तद्वेग-प्रत्यक्षापत्तेः। तेन कर्मजननापत्तेश्च वेगसामान्यस्यैव कर्मजनकत्वात्। चरम-संयोगोत्पत्तितत्पूर्वक्षणयोश्च वेगस्य न प्रत्यक्षम् किन्तु कर्मण एव। वेगसिद्धिस्तु उत्तरकर्मार्थमेव नतु प्रत्यक्षत एव। येन कर्मविषयकत्वेन अन्यथासिद्धिराश-ङ्कनीया इति क्षेपः।

इति वेगनाशदर्शनम्।

समवायिनाशः समवेतकार्यस्य नाशकः। तथाहि तद्व्यक्तिनाशत्वेन स्व-प्रतियोगिसमवेतत्वसम्बन्धेन कारणता प्रतियोगिता सम्बन्धेन तद्व्यक्तिसमवेत-

---

१ 'न' इति पुस्तकान्तरे नास्ति। २ 'गवेष्येत' इति पुस्तकान्तरे।

नाशत्वेन कार्यता। नचारम्भकसंयोगनाशपाकादिजन्ये [१]जन्यरूपादिनाशे व्यभिचारः कालिकविशेषणतया तत्तद्व्यक्तिनाशवत्वेन तत्तद्व्यक्तिसमवेतस्य विशेषणत्वात् नतु तत्तद्व्यक्त्यवृत्तित्वेन कार्यनाशो विशेषणीयः, समवायिनाश-सहोत्पन्ने तादृशे द्रव्यादिनाशे [२]व्यभिचारवारणात्। तत्तद्गुणादिप्रागभावे तत्तद्गुणादिनाशः [३]प्रतियोगितया सम्बद्धोपि नोत्पद्यते अव्यवहितपूर्ववर्त्तिन्येव वस्तुनि विषयतातिरिक्तसम्बन्धेन कार्यस्योत्पत्तेः यथोक्तकारणबाधाच्च इति न तत्र व्यभिचारः। तद्व्यक्तिसमवेतजातौ कार्यस्य नाशस्यापत्तिवारणाय च कालिकविशेषणतापि कारणसम्बन्धो निवेश्यते। वस्तुतः समवायिव्यक्तिभिन्ना-नन्तकारणतायां[४] कालिकविशेषणतासम्बन्धो न निवेश्यते किन्तु सामान्यतः प्रतियोगितया नाशं प्रति तादात्म्येन सत्वेन प्रतियोगिनः कारणत्वमेकं कल्प्यते लाघवात्। अतएव सत्ताजातिसिद्धिरपि।

ननु कालिकविशेषणतैव कार्यकारणसम्बन्धोऽस्तु। तत एव जातौ नाशा-पत्तिरपि वार्यताम्। नच प्रतियोगितासम्बन्धेन तत्समवेतनाशः तत्समवेत एव नान्यत्र इत्यत्र किं नियामकमितिवाच्यम्, नियामकं हि ज्ञापकं कारणं वा. आद्ये ज्ञान सामान्यसामग्री अन्त्ये न किंचित्, तेन सम्बन्धेन कार्यताया अनभ्युपगमात् अन्यथा [५]विषयित्वादिसम्बन्धेनापि तत्र तत्र नियामकं गवेष्यतामिति चेत् न सम्बन्धविशेषेण कार्योत्पत्तेः कारणनियम्यत्वात्। [६]विषयित्वादीनां च उत्पत्ति-निरूपकत्वाभावात् तत्र प्रामाणिकव्यवहारस्यैव प्रमाणत्वादिति। ननुतद्व्यक्ति-नाशवत्वं तन्नाशसमकालोत्पन्नतद्व्यक्तिनाशवत्वादिकं वा विशेषणमित्यत्र विनिगमनाविरहान्नाशकतानन्त्यम्। नच प्रागुक्तविशेषणताविशेषेण वृत्तिमद-न्यत्वं कार्यनाशे निवेश्यमिति वाच्यम्, तत्रापि विनिगमकस्याभावात्। एक समवायिनाशानन्तरं जातानां [७]द्रव्यसंयोगविभागद्वित्वादिनाशानां कारणान्तरस्य

---

१ 'द्रव्यरूपादिनाश्ये' इति पुस्तकान्तरे। २ 'व्यभिचारावारणात्' इति पुस्तकान्तरे। ३ 'प्रतियोगितासम्बन्धेन' इति पुस्तकान्तरे। ४ 'समवायि-व्यक्तिभिन्नानन्तनाशकतानाम्' इति पुस्तकान्तरे। ५ 'विषयत्वादिसम्बन्धेनापि' इति पुस्तकान्तरे। ६ 'विषयत्वादीनां च' इति पुस्तकान्तरे। ७ 'द्रव्यसंयो गविभागादिनाशानाम्' इति पुस्तकान्तरे।

गवेषणीयत्वापत्तेः । अपरसमवायिनि तेषां तेन सम्बन्धेन वृत्तिमत्वादिति चेत्, न, कारणीभूतनाशव्यक्तेरेव विशेषणीयत्वात् शीघ्रोपस्थितिकत्वस्य विनिगमकत्वात् इति साम्प्रदायिकाः ।

नूतनास्तु प्रतियोगितया नाशवत्प्रतियोगिकनाशत्वेन नाशवद्वृत्तिप्रतियोगितया नाशत्वेनैव वा कार्यता स्वप्रतियोगिसमवेतत्वेन नाशत्वेन कारणता । एकैकं नाशवत्वं च स्वप्रतियोगिसमवेतत्वकालिकविशेषणताभ्यां निविष्टम् । ध्वंसं प्रति सत्वेन प्रतियोगिनः कारणत्वान्तराच्च न जातौ नाशः । वस्तुतस्तु न कारणतान्तरं प्रतियोगिनः, किन्तु नाशकारणतायामेव जन्यत्वं कालिकविशेषणता वा सम्बन्धो निवेश्यः समवायिव्यक्तिभेदेन नाशकताभेदस्याभावात् । [1]तत्कारणतावच्छेदकसम्बन्धस्य कालिकस्वप्रतियोग्याधारत्वरूपपूर्वत्वस्य नित्ये अभावादिति प्राहुरितिसंक्षेपः ।

इति समवायिनाशनाशकतादर्शनम् ।

द्रव्यस्यासमवायिकारणसंयोगनाशोपिनाशकः । समवायिनाशमात्रनाश्यत्वे द्व्यणुकस्य द्रव्यान्तरस्य चावयवेषु असत्सु आरम्भकसंयोगनाशान्नाशानुपपत्तेः । तत्र यद्यपि प्रतियोगितया द्रव्यनाशं प्रति स्वप्रतियोगिसमवायिसमवेतत्वसम्बन्धेन संयोगनाशत्वेन न कारणता तन्तुकपालाद्योः संयोगनाशाद्घटपटाद्योर्नाशापत्तेः । नापि स्वप्रतियोगिव्यापकत्वसम्बन्धेन दशाद्यवच्छेदेनोदासीनतन्तुद्वयादिसंयोगनाशादपि पटादिनाशप्रसङ्गात् । तथापि स्वप्रतियोगिजन्यताविशेषः सम्बन्धो निवेश्यः । विशेषस्तु समवायावच्छिन्नजनकतानिरुपितत्वम् । तेन कालोपाध्यादिविधया जनकतामादाय नातिप्रसङ्गः । दण्डतुरीसंयोगादेश्च न घटपटादौ तादृशीजनकता मानाभावात् अन्वयव्यतिरेकयोरारम्भकसंयोगोपक्षीणत्वात् । धूमादौ जलसंयोगादेश्च न जनकः किन्तु संयोगेन जलादिः । तत्रापि रसविशेषादावेवोपक्षयो[2] निष्कर्षः । उपाधानं च सम्बन्धे

---

१ 'नाशत्वेन नाशकः न प्रागुक्तकार्यकारणभावाद्वा न जातौ नाश प्रसगः' इत्यधिकः पाठः 'तत्कारणतावच्छेदकसम्बन्धस्य' इत्यत्रः प्राक् पुस्तकान्तरेऽस्ति ।

२ 'रसविशेषादादेवोपेक्षयोर्निष्कर्षः इति पुस्तकान्तरे ।

निवेश्यम् । तच्च स्वप्रतियोग्याधेयत्वं कालिकम् । तेन सह पटादिनाशकात् संयोगनाशात् तज्जननयोग्यस्याखण्डपटादेर्न क्षणिकत्वापत्तिः पाकनाशेन पाकज-रूपादौ कपालादिनाशेन तद्गुणादौ च द्रव्यनाशस्य कार्यस्यापत्तिवारणार्थं द्रव्यत्वमपि कारणसम्बन्धः । यद्वा स्वप्रतियोगिसमवायिसमवेतत्वस्य स्वप्रति-योग्याधेयत्वसम्बन्धेनारम्भकसंयोगनाशत्वेन नाशकता । स्वप्रतियोगिनस्तदानी-मसत्वेपि तदाधेयत्वसत्तायां न विरोधः उदासीनसंयोगवारणार्थमारम्भकेति । कर्मजन्यतावच्छेदकवैजात्यपरिचायकं द्व्यणुकानुरोधेन कर्मजसंयोगस्यैवारम्भक-त्वस्योक्तत्वात् । यथा च न नोदनत्वादिना सङ्करस्तथोक्तम् । अथावयवनाशा दवयविनाशे व्यभिचार इति चेत्, न प्रतियोगितया नाशवद्द्रव्यनाशत्वेन नाशवद्द्रव्यवृत्तिप्रतियोगितया नाशत्वेनैव वा कार्यत्वात् । नाशवत्त्वं च स्वप्रति-योगिजन्यताविशेषकालिकविशेषणताभ्यां स्वप्रतियोगिसमवायिसमवेतत्वकालिक-विशेषणताभ्यां वा अवयवनाशनाश्ये च द्रव्ये स्वारम्भसंयोगनाशस्य न कालिकी विशेषणतेति । यत्र चारम्भकसंयोगस्य युगपदेव नाशस्तत्रार्थसमाजादुभाभ्यां समवायासमवायिनाशाभ्यामवयवी नाश्यते कार्यतावच्छेदकयोरविरोधादिति सम्प्रदायानुसारः ।

मध्यास्तु सर्वद्रव्याणामारम्भकसंयोगनाशएव नाशकः अवयवनाशानन्तरं क्षणं विलम्ब्यावयविनो नाशाभ्युपगमात् । कार्यतायामुक्तनाशवत्वानिवेश-लाघवात् । अतएव विलम्बक्षणे तदवयविनि वाय्वादिसंयोगाद्यनेकव्यक्ति-कल्पनेऽपि न क्षतिः कार्यतालाघवस्याभ्यर्हितत्वात् । सम्बन्धादिनिरुक्तिरुक्तदि-शैवेति वदन्ति । तन्न बिलम्बक्षणे विशिष्यद्रव्यनाशस्य प्रतियोगितयापादन-सम्भवेऽपि समवायिनाशकार्यस्य सामान्यतस्तदवयविनि समवेतनाशस्यापत्तेः । द्रव्यनाशातिरिक्तस्यापि समवेतनाशस्य सुप्रसिद्धत्वात् । द्रव्यभिन्ननाशे द्रव्य-भेदस्य कारणतान्तरकल्पने क्लृप्तसमवायिनाशकार्यता कारणतावच्छेदकसम्ब-न्धमध्ये द्रव्यभेदस्य निवेशे वा लाघववैपरीत्यादिति ध्येयम् ।

एके तु विजातीयविभागः स्वविशिष्टद्रव्यनाशकः । वैजात्यं च कर्म-जन्यतावच्छेदकं द्व्यणुकनाशानुरोधात् आरम्भकसंयोगप्रतिद्वन्द्विषु विभागेषु स्वीकार्यमतो नोदासीनविभागादतिप्रसङ्गः । तथा च समवायि समवेतत्वं

द्रव्यत्वं च कारणसम्बन्धः। नचैवं विभागसहोत्पन्नद्रव्यं क्षणिकं स्यात्। पूर्वत्वस्यापि सम्बन्धस्य निवेशात् नाशत्वेन प्रागुक्तसामान्यकार्यकारणभावाद्वेति प्राहुः। तदपि वेणुदलद्वयविभागादौ शब्दजनकतावच्छेदकवैजात्येन सङ्करप्रसङ्गेन विभागवैजात्यस्याभ्युपगन्तुमशक्यत्वात् संयोगनाशस्य नाशकतायामारम्भकतावच्छेदकजातेर्व्यापकत्वस्य नोदनत्वादेः कस्यचित्तद्व्यावृत्तत्वस्य कस्यचित्ताद्विरुद्धस्योक्तत्वात्। वैपरीत्ये द्रव्यं प्रत्यारम्भकसंयोगस्य तन्नाशं प्रति तन्नाशस्य कारणतयोर्बाहुल्यापत्तेर्विनिगमकार्थमुक्तत्वात्। विभागनाशकतायां च विनिगमकस्यासम्भवेन सर्ववैजात्यनानात्वेत्यन्तगौरवादिति संक्षेपः।

इति द्रव्यनाशदर्शनम्।

इति वेदवेदाङ्गपारगश्रीरत्नपत्युपाध्यायात्मजमहामहोपाध्यायकाश्यपश्रीमदुमापतिविरचितं पदार्थीयदिव्यचक्षुः सम्पूर्णम्॥



# मिथिलाविद्यापीठग्रन्थमाला

## १. प्राचीनाचार्यग्रन्थावली

१. *तत्त्वचिन्तामणिः*—गङ्गेशोपाध्यायविरचितः आलोक-दर्पण-संवलितः।
प्रत्यक्षखण्डे प्रामाण्यवादान्तः प्रथमो भागः। १९५७ मूल्यम्—१२.००
२. *काव्यपरीक्षा*—श्रीवत्सलाञ्छनभट्टाचार्यविरचिता। १९५६ मूल्यम्—८.००
३. *पारिजातहरणम्*—महाकाव्यम् कविकर्णपूरविरचितम्। १९५६ मूल्यम्—८.००
४. *काव्यलक्षणरत्नश्रीः*—सिंहलाचार्य-रत्नश्रीज्ञानविरचिता दण्डि-काव्यादर्शटीका
१९५७ मूल्यम्—१५.००
५. वैशेषिकदर्शनम्—अविज्ञातकर्तृकप्राचीनव्याख्योपेतम्। १९५७ मूल्यम्—६.५०
६. *अभिज्ञानशकुन्तलम्*—कालिदासकृतं शङ्कर-नरहरिकृतटीकाद्वयोपेतम्।
१९५७ मूल्यम्—१५.००
७. *आगमडम्बरम्*—नाटकं जयन्तभट्टकृतम्।
८. *लीलावती*—भास्कराचार्यकृता दामोदरमिश्रकृतवासनोद्भासिता ज्योतिषग्रन्थः
१९५९ मूल्यम्—१४.००
९. *मन्त्रकौमुदी*—देवनाथठक्कुरकृता। १९६० मूल्यम्—६.००
१०. *पदार्थीयदिव्यचक्षुः*—उमापत्युपाध्यायकृतम्। १९६१ मूल्यम्—२.५०
११. *रसतरङ्गिणी*—रामानन्दठक्कुरकृता। १९६१ मूल्यम्—२.२५
१२. *अलङ्कारमंजरी*—वेणीदत्तशर्मकृता। १९६१ मूल्यम्—२.००

## २. अर्वाचीनाचार्यप्रबन्धावली

१. *रामावतारप्रकीर्णप्रबन्धावली*—प्रथमः खण्डः। १९५६ मूल्यम्—११.००
२. *त्रितलावच्छेदकतावादः*—नव्यन्यायग्रन्थः पण्डितप्रवरश्रीशशिनाथ (झा) शर्मकृतः
१९५६ मूल्यम्—४.५०
३ *लिङ्गवचनविचारः*—व्याकरणग्रन्थः पण्डितदीनबन्धुझाविरचितः। १९५४
मूल्यम्—४.००
४. *विमण्डलचक्रविचारः*—ज्योतिषग्रन्थः पण्डितश्रीदयानाथझाविरचितः। १९५४
मूल्यम्—२.००

## 3. Studies in English

1. *History of Mithila*:-by Dr. Upendra Thakur [1956 A. D.]
Price Rs. 17.50
2. *History of Navya-Nyaya in Mithila*:—by Prof. Dinesh Chandra Bhattacharya [ 1958 A. D. ] Price Rs. 13.50
3. *Vachaspati Mishra on Advaita Vedanta*:—by Dr. S. S. Hasurkar [ 1958 A. D. ] Price Rs. 15.00

## ४· महायानसंस्कृतग्रन्थावली

| | | जिल्द | अजिल्द |
|---|---|---|---|
| १. *अवदानशतकम्*— | १९५८ मूल्यम्— | १२.५० | १०.०० |
| २. *ललितविस्तरः*— | १९५८ मूल्यम्— | १२.५० | १०.०० |
| ३. *दिव्यावदानम्*— | १९५९ मूल्यम्— | २०.०० | १६.०० |

| | | जिल्द अजिल्द |
|---|---|---|
| ४. मध्यमकशास्त्रम्— | | मूल्यम्—१२.५०—१०.०० |
| ५. महायानसूत्रसंग्रहः— | १९६१ | मूल्यम्—२०.००—१६.०० |
| ६. अवदानकल्पलता प्रथम भाग- | १९५९ | मूल्यम्—१२.५०—१०.०० |
| ७. ,, ,, द्वितीय भाग- | १९५९ | मूल्यम्—१२.५०—१०.०० |
| ८. सद्धर्मपुण्डरीकसूत्रम्— | १९६० | मूल्यम्—१२.५०—१०.०० |
| ९. बोधिचर्यावतारः— | १९६० | मूल्यम्—१२.५०—१०.०० |
| १०. गण्डव्यूहसूत्रम्— | १९६० | मूल्यम्—२०.००—१६.०० |
| ११. जातकमाला— | १९५९ | मूल्यम्—१२.५०—१०.०० |
| १२. समाधिराजसूत्रम्— | १९६१ | मूल्यम्—१६.००—१२.०० |
| १३. शिक्षासमुच्चयः— | १९६० | मूल्यम्—१२.५०—१०.०० |

## मुद्रणार्थं प्रस्तुताः ग्रन्थाः

१. विष्णुपुराणम्—सामीक्षिकं संस्करणम्।
२. तत्त्वचिन्तामणिः—आलोकदर्पणान्वितः प्रत्यक्षखण्डे द्वितीयो भागः।
३. न्यायचतुर्ग्रन्थिका—न्यायसूत्र-भाष्य-वार्तिक-तात्पर्य-परिशुद्धिरूपा सटीका सूत्रत्रयात्मकः प्रथमः खण्डः।
४. सुवर्णप्रभाससूत्रम्—
५. तथागतगुह्यकम्—
६. सूत्रालंकारः—
७. महावस्तु—
८ मूलसर्वास्तिवादिनां विनयः—
९. प्रज्ञापारमितासंक्षेपाः द्वितीय खण्ड—
१०. महायानस्तोत्रसंग्रहः—
११. अश्वघोषग्रन्थाः—बुद्धचरितम् सौन्दरनन्दनम्।
१२. सुलोचना—माधवचम्पू

## मुद्रणयन्त्रस्थाः ग्रन्थाः

१. लक्षणमाला—उदयनकृता श्रीशशिनाथझाकृतटीकासहिता।
२. कुमारिलकारिकावली—कुमारिलस्वामिपादकृता।
३. रत्नकोशमतवादार्थः—
४. लक्षणावली—उदयनकृता केशवभट्टकृतटीकासहिता।
५. विवरणपञ्चिका—

| | |
|---|---|
| ६. लङ्कावतारसूत्रम्— | मूल्यम्—१२.५०—१०.०० |
| ७. अष्टसाहस्रिका— | मूल्यम्—२५.००—२०.०० |
| ८. दशभूमिकसूत्रम्— | मूल्यम्—१२.५०—१०.०० |
| ९. प्रज्ञापारमितासंक्षेपाः— | मूल्यम्—२०.००—१६.०० |